अनन्तशयनसंस्कृतग्रन्थावलिः.

ग्रन्थाङ्कः २३.

---

# नानार्थार्णवसंक्षेपः

केशवस्वामिप्रणीतः

संस्कृतग्रन्थप्रकाशनकार्याध्यक्षेण

त. गणपतिशास्त्रिणा

संशोधितः ।

प्रथमः सम्पुटः — १, २, भागौ ।

स च

अनन्तशयने

महामहिमश्रीमूलकरामवर्मकुलशेखरमहाराजशासनेन

राजकीयमुद्रणयन्त्रालये

मुद्रयित्वा प्रकाशितः ।

---

कोल्लमाब्दाः १०८८. क्रैस्ताब्दाः १९१३.

# PREFACE.

This edition of Nanarthārnavasamkshepa, a lexicon, is based on the following six palm leaf manuscripts in Malayalam character:

(क) Belonging to Govinda Pisharodi, Kulisapuram.

(ख) Running up to the word कार्त्तिकी, from the Palace Library.

(ग) Belonging to the Palace Library.

(घ) Running up to the word घाम belonging to Nilakanthan Namburi, Vaikam.

(ङ) From Mr. Rajarajavarma Raja, Ennakkatu.

(च) Beginning from the word भूजम्बू, belonging to Nilakanthan Namburi, Vaikam.

The Nanartha words or homonyms with their different *lingas* are arranged in this work, in six Kandas. The first Kanda contains words of one syllable and the second Kanda, those of two syllables and so on. Each Kanda is again sub divided into five Adhyayas namely, स्त्रीलिङ्गाध्याय, पुंलिङ्गाध्याय, नपुंसकलिङ्गाध्याय, वाच्यलिङ्गाध्याय and नानालिङ्गाध्याय. For facility of reference, the words are arranged in each Adhyaya, in alphabetical order. The work treats of several words and meanings not found in Amarakosa and other common lexicons.

The work was, as is evident from the prefatory verses written at the instance of a Chola King, Sri Rajaraja, son of Sri Kulottunga Chola by Kesavaswamin a Chhandoga Brahmin living in the village of Rajendra Chola. The work is accordingly styled with another significant title 'Rajarajiya'. In the work,* 'a short history of Chola Kings,' a Kulottunga is said to have lived in

* Written in Tamil by Mr. T. A. Gopinatha Rao, M. A., Superintendent of Archaeology, Travancore.

12th Century A.D., and his son was Râjarâja. Another Kulottunga is also mentioned as having lived in the first half of the 13th Century A.D., and his son was also called Râjarâja. Either of these two Râjarâjas may be the patron of the author.

The author is quoted by Mallinâtha† and also by Arunâchalanâtha* who lived before Mallinâtha, in their commentaries on Mahâkâvyas.

The present volume which contains the first two Kâṇḍas forms the first part of the Nânârthârnavasankshepa. The second part with Tryaksharakâṇḍa, and the third, with the remaining three Kâṇḍas will be published in due course.

Trivandrum T. GANAPATI SÂSTRÎ.

---

† "वज्रं त्वस्त्री कुलिशशस्त्रयोः । मणिवेधे रत्नभेदे इति केशवः", vide his commentary on Raghuvamsa Sarga 1, Sloka 4.

* "त्रिष्वन्यत्रोपयुक्ततः इति, केशवस्वामिवचनादुपयुक्तादन्यदभिधानस्य शेषशब्दस्य विशेष्यलिङ्गत्वमवसेयम्". Vide his commentary on Kumarasambhava, called Prakâsikâ, Sarga 1, Sloka 11.

# निवेदना ।

नानार्थार्णवसंक्षेपो नामायं कश्चिन्निघण्टुग्रन्थः । अस्य संशोधनाधारतया षड् आदर्शाः कैरलीलिपयस्तालपत्रात्मका आसादिताः । यथा —

(क) कैलासपुरगोविन्दपिषारोटिसकाशादधिगतः ।

(ख) राजकीयग्रन्थशालास्थः कार्त्तिकीशब्दान्तः ।

(ग) राजकीयग्रन्थशालास्थः ।

(घ) कण्णिकुळं नीलकण्ठनम्पूरिसंबन्धी यामशब्दान्तः ।

(ङ) एण्णक्काट्टुराजराजवर्मराजसकाशादधिगतः ।

(च) कण्णिकुळं नीलकण्ठनम्पूरिसम्बन्धी भूजम्बूशब्दमारभ्य ।

अत्र नानार्थानि सलिङ्गानि नामानि एकस्वरादीनि षट्स्वरपर्यन्तानि षड्भिः काण्डैः संगृहीतानि । प्रतिकाण्डं च स्त्रीलिङ्ग - पुंलिङ्ग - नपुंसकलिङ्ग - वाच्यलिङ्ग - नानालिङ्गभेदेन पञ्चाध्यायाः । अत्र जिज्ञासितस्य शब्दस्य सुखदर्शनार्थमकारादिक्रम आदिवर्णेष्वादृतः । अमरकोशादिष्वनुपलब्धाः शब्दा अर्थाश्च बहुलमितोऽध्येतुं शक्याः ।

राजेन्द्रचोळसंज्ञाग्रहारवास्तव्यश्छन्दोगः केशवस्वामी चोळाधिपतेः श्रीकुलोत्तुङ्गचोळसूनोः श्रीराजराजदेवस्य चोदनया ग्रन्थमेनं प्रणिनायेत्येतत्पूर्वपीठिकातोऽवगम्यते । अत एव राजराजसंबन्धाद् 'राजराजीयम्' इत्यप्यस्य ग्रन्थस्य संज्ञान्तरम् । चोळवंशचरित्तसंग्रहे* क्रैस्ताब्दस्य द्वादशशतके स्थित एकः कुलोत्तुङ्गचोळः कथितः, तत्पुत्र एको राजराजश्च । त्रयोदशशतकपूर्वार्धे स्थितोऽपरः कुलोत्तुङ्गो वर्णित , तत्सूनुरपरश्च राजराजः । राजराजयोरेनयोरन्यतरः केशवस्वामिन आश्रयः कामं सम्भाव्यते ।

---

* अयं द्रमिलभाषाग्रन्थः टि. ए. गोपीनाथराय (एम् ए) महाशयेन अनन्तशयनराजकीयपुरातनवस्तुविचारकार्यालयाध्यक्षेण प्रणीय प्रकाशितः ।

इमं केशवस्वामिनं मल्लिनाथः‡ स्वीयासु महाकाव्यव्याख्यासु प्रमाणयति, तथा मल्लिनाथप्राचीनोऽरुणाचलनाथः§ ।

एष नानार्थार्णवस्य प्रथमः सम्पुटः प्रथमकाण्डद्वयात्मक इदानीं प्रकाश्यते । द्वितीयस्त्र्यक्षरकाण्डात्मा तृतीयश्चावशिष्टकाण्डत्रयात्मा क्रमशः प्रकाशमेष्यतः ।

अनन्तशयनम्. त. गणपतिशास्त्री.

---

‡ "वज्रं त्वस्त्री कुलिशशस्त्रयोः । मणिवेधे रत्नभेदे इति केशवः" इति रघुवंशप्रथमसर्गचतुर्थश्लोकव्याख्यायाम् ।

§ "[illegible] इति केशवस्वामिवचनादुपयुक्तादन्यदभिदधानस्य शेषशब्दस्य दीप्यार्थत्वमसंशयम्" इति कुमारसम्भवप्रथमसर्गषोडशश्लोकव्याख्यायाम् ।

पर्जन्यस्येव वर्षासु वस्तूनि बहु वर्षत ।
न किञ्चिदपचीयन्ते कोशा प्रत्युत वर्धना ॥ ७ ॥

धर्मस्यैव समुच्छ्रायादधर्मस्य च निग्रहात् ।
सुखेन वृत्ते साधूनामसाधूना नियन्त्रणात् ॥ ८ ॥

अमुना राजराजेन कलि कृतयुगीकृत ।
बहुना किं प्रजल्पेन महात्मानोऽपि तद्गुणान् ॥ ९ ॥

शसितु कवयोऽशक्ता किं पुनर्मादृशो जन ।
महाग्रहारो राजेन्द्रचोलसञ्ज्ञो महात्मनाम् ॥ १० ॥

सर्वविद्यासमृद्धाना श्रीमतामूर्जिततेजसाम् ।
निवासो विप्रवर्याणा चोले[२]ष्वासीत् प्रतिष्ठित ॥ ११ ॥

महामाहेश्वराणा यस्तारण्यस्येव यज्वनाम् ।
राज्ञा राजेन्द्रचोलेन स्वनाम्ना स्थापित पुरा ॥ १२ ॥

राष्ट्रस्यास्य समृद्धस्य शिरोभूषणसन्तति ।
तत्राग्रहारे वास्तव्यो वत्सगोत्रसमुद्भव ॥ १३ ॥

सामवेदविदा मान्य केशवस्वामिनामक ।
श्रीराजराजदेवस्य सेवकोऽभूद् द्विजाग्रणी ॥ १४ ॥

त कदाचित् समामन्त्र्य सेवमान महीपति ।
चिराचिकीर्षितं वस्तु [३]भूत्वाज्ञापयदीदृशम् ॥ १५ ॥

आर्य! वत्ससुतायोऽत्र कौतूहलमतीव मे ।
सलिङ्गोऽप्यपष्टसाधूना नाम्ना नानार्थवाचिनाम् ॥ १६ ॥

परम्परायोस्त्वद्दते न चान्य शब्दवित्तम ।
एकद्वित्रिचतुःपञ्चषट्स्वरैर्नामभि क्रमात् ॥ १७ ॥

काण्डानि प्रतिकाण्ड च पञ्चाध्यायी क्रमाद् यथा ।
स्त्रीपुंनपुंसकैर्वाच्यलिङ्ग सङ्कीर्णलिङ्गकै ॥ १८ ॥

---

१ 'वर्धते' ग. पाठः. २ 'चोलं' ख. पाठः. ३ '[illegible]' ख. पाठः.
४ '[illegible]' ग. पाठः.

अनेकार्थैरकारादिक्रमोपेतादिवर्णकैः ।
जिज्ञासितस्य शब्दस्य सुखदर्शनसिद्धये ॥ १९ ॥

इत्युक्तो राजराजेन शिरसादाय शासनम् ।
शास्त्रं कर्तुमुपाक्रंस्त राजराजोक्तवर्त्मना ॥ २० ॥

ओङ्कारममृतं ब्रह्म शिवमक्षरमव्ययम् ।
यमामनन्ति वेदेषु तं प्रपद्ये विनायकम् ॥ २१ ॥

यस्यार्थे वन्दे त्वा भव! हर! महिला विलासिनी स्तननमिता ।
शिरसि सरिद् वीचीभिर्भवहरमहिलाविलासिनीस्तननमिता ॥ २२ ॥

बहुष्वाचार्यवाक्येषु बहुशः पुनरुक्तितः ।
पुनरुक्तान् विहायार्थानन्यार्थेष्वभिधास्यते ॥ २३ ॥

एकद्वित्रिचतुःपञ्चषट्स्वरैर्नामभिः क्रमात् ।
षट् काण्डाः प्रतिकाण्डं च पञ्चाध्याया यथाक्रमात् ॥ २४ ॥

स्त्रीपुन्नपुंसकैर्वाच्यलिङ्गैः सङ्कीर्णलिङ्गकैः ।
अनेकार्थैरकारादिक्रमोपात्तादिवर्णकैः ॥ २५ ॥

अस्त्रीविषयजातीनां जातिमात्रे नृता स्मृता ।
अर्थे योनिमति स्त्रीत्वं पुंस्त्वं मेढ्रवति स्मरेत् ॥ २६ ॥

द्वे द्वयोरिति वा शब्दावस्मिन्नर्थेऽवधारयेत् ।
ये तु शब्दाः प्रवक्ष्यन्ते स्थावरान्तरवाचिनः ॥ २७ ॥

तेषां स्वफलपुष्पेषु प्रतीयात् क्लीबलिङ्गताम् ।
अस्यार्थस्य यदा क्वापि पुनरुक्तिर्भविष्यति ॥ २८ ॥

एतस्यैव प्रपञ्चस्य स्मरणायेति मन्यताम् ।
स्त्रीपुन्नपुंसकानां ये शब्दाः स्युर्वाचकाः पृथक् ॥ २९ ॥

लिङ्गमाचक्ष्महे शब्दैस्तैरन्यत् परिभाष्यते ।
त्रि त्रिलिष्वित्यमी शब्दा वाच्यलिङ्गस्य वा[१]चकाः ॥ ३० ॥

---

१. 'स्मा' ख. पाठः.

प्रयोक्ष्यन्ते त्रिलिङ्गस्य त्र्यशब्दः प्रयोक्ष्यते ।
क्लीबे क्ली नविति त्वन्तः पुनरन्तमथादि च ॥ ३१ ॥

अथोआदि च नेष्यन्ते पूर्वसम्बन्धभाक्तया ।
अस्त्रीत्यादिनिषेधेषु नृपण्डादीतरद्वयम् ॥ ३२ ॥

एवं समीक्ष्य मेधावी लिङ्गं विद्यात् प्रयत्नतः ।
नामज्ञानेऽप्यलिङ्गज्ञा नाद्रियन्ते हि वाग्मिभिः ॥ ३३ ॥

अन्त्याध्यायद्वये यत्रकचित् स्त्रीप्रत्ययोद्भवात् ।
शब्देषु वर्णवृद्धिः स्यात् सन्मद्वृहद्दादिषु ॥ ३४ ॥

तान् पश्येत् प्रकृतेर्योग्ये स्थाने वृद्धाक्षरानपि ।
सतीमहत्यशुमतीश्रेयसीबृहतीमुखान् ॥ ३५ ॥

ग्रन्थप्रणयमिच्छूनां विशेषात् काव्यकारिणाम् ।
उपन्यसितुमिच्छूनां विदुषां परिषत्स्वपि ॥ ३६ ॥

राजगोष्ठीषु शब्दार्थलिङ्गयोर्मोहसंशयात् ।
विदुषां कलहे प्राप्ते जिगीषूणां मनीषिणाम् ॥ ३७ ॥

आदरणीयमवश्यं शास्त्रमिदं सत्पथे विविक्षूनाम् ।
डिड्ढयिषमाणानामिव पतत्रयुगलं पतत्त्रिणाम् ॥ ३८ ॥

गरुडेनेव भोगीन्द्रः स्पर्धमानः पराभवेत् ।
अवश्यमेतद्विदुषा बहुज्ञोऽपि वदावदः ॥ ३९ ॥

विद्वद्दूषिषदेशेषु केरलीरादिषु तद्विदाम् ।
इतीरद्धा सरला स्वल्परः क्रियते मया ॥ ४० ॥

नामाम्बुधेरपर्यन्तात् स्वशक्त्या किञ्चिदाददे ।
प्रत्यक्षुभिताम्भोधेरादादे मशकः कियत् ॥ ४१ ॥

यदत्र मतिमान्द्येन स्खलितं सम्भविष्यति ।
मनीषिणः क्षमन्तां तदेक एव हि सर्ववित् ॥ ४२ ॥

---

१ 'ड्' क ग घ. पा०. २ व विदु' ग पठ ३. 'ख' क घ पाठः

द्वन्द्वपूर्वनिपातेषु भूयोभूयः क्वचित् क्वचित् ।
अन्यथाकरणं दृष्टं पौरस्त्येषु निघण्टुषु ॥ ४३ ॥

तच्च वृत्तानुरोधेन कृतं तैर्न प्रमादतः ।
ग्रन्थगौरवभीत्यैव तच्चास्माभिः कृतं तथा ॥ ४४ ॥

अथ स्त्रियां बहुष्वापः सलिले छन्दसोऽपि ।
शताक्षेरेऽष्टनवतिस्वरे ह्रीबेर एव च ॥ ४५ ॥

भूमेरधस्ताल्लोकेषु यत् त्विदं जलवाचिनाम् ।
अतिदेशो वैजयन्त्यां मुस्ते तन्न विरोचते ॥ ४६ ॥

आप इत्येवमाम्नातं समाम्नाये स्वनामसु ।
तत्र सन्दिह्यतेऽप्शब्दो जसन्तः किन्नु पठ्यते ॥ ४७ ॥

आपशब्दोऽथवा स्वन्त इति तस्यापि दृश्यते ।
ऋचि प्रयोगः स यथा 'मध्य आपस्य तिष्ठति'* ॥ ४८ ॥

तस्मादर्थतया व्योम नाप्शब्दस्येह कीर्तितम् ।
ऊशब्दो रक्षणे तृप्तौ प्रीतावचगतौ गतौ ॥ ४९ ॥

वृद्धावचाप्तौ दीप्तौ च प्रवेशे श्रवणेच्छयोः ।
स्वाम्यसामर्थ्ययाच्ञासु क्रियायां भावहिंसयोः ॥ ५० ॥

आलिङ्गने च दहनेऽप्यर्थेष्वेकान्नविंशतौ ।
अत्यन्तमप्रसिद्धत्वादेवमादि न वक्ष्यते ॥ ५१ ॥

ऊर्गन्नानरसोत्साहबलेषु स्याच्चतुर्ष्वपि ।
ऋशब्दस्त्वदितौ स्वर्गेऽप्यृग् वाण्यां पद्यमात्रके ॥ ५२ ॥

क्ष्माशब्दो भुवि नद्यां च गिर्शब्दो वाचि योषिति ।
ज्या भूमिमौर्व्योस्त्वग् गन्धद्रव्ये चर्मणि वल्कले ॥ ५३ ॥

त्विड् ज्वालादीप्तिशोभासु तृट् तु वाञ्छापिपासयोः ।
द्वार्द्वारोपाययोरुक्ता द्योशब्दः स्वर्गनाकयोः ॥ ५४ ॥

---

१. 'द्वा' घ. पाठः. २. 'ति' ग. पाठः.

---

* सामवेदे (उत्त. प्रपा. ८. सू. १४. म. ३)

धीस्तु कर्मणि बुद्धौ च धूस्तु यानमुखेऽङ्गुलौ ।
भारे विकृतगीतौ च गायत्राह्वयसामनि ॥ ५५ ॥
साम्रा द्रष्टृषु चैकेषु नौर्वाकालेतरिष्वथ ।
पूर्देहे नगरे बुद्धौ भास्तु रश्मौ रुचावपि ॥ ५६ ॥
भूर्भूम्यां स्थानमात्रे च सौराष्ट्र्यां व्योमदेहयोः ।
मा पार्वत्यां च लक्ष्म्यां च निर्लिङ्गोऽसौ निवारणे ॥ ५७ ॥
मृन्मृत्तिकायां भैषज्यभेदे तुवरिकाह्वये ।
मृच्छब्दो जलवाच्यस्ति धान्तदान्तत्वसंशयात् ॥ ५८ ॥
समाम्नायसमाम्नातो निरुक्त्यात्र निवेद्यताम् ।
रुक् प्रभाकान्तिकाङ्क्षासु रुज् तु स्याद् व्याधितोदयोः ॥ ५९ ॥
वाग् वाण्यां गौणवृत्त्या तु शब्दे वक्त्रे च कंचन ।
श्रीरिन्दिरायां शोभायां स्यात् संपत्तिलवङ्गयोः ॥ ६० ॥
प्रथमायां विभक्तौ च व्याचष्टे भगवानमूम् ।
स्त्री प्रियङ्ग्वाह्वये वृक्षे वर्णावनितयोरपि ॥ ६१ ॥
लभाद्य सप्तमे राशौ लिङ्गभेदे च शब्दगे ।
स्रुक् स्रुवे शोषणे गत्यामित्यध्यायं समामनन् ॥ ६२ ॥

इत्येकाक्षरकाण्डे स्त्रीलिङ्गाध्यायः ।

---

## अथैकाक्षरकाण्डे पुंलिङ्गाध्यायः ।

अथैकाक्षरपुंलिङ्गा अकारो विष्णुवेधसोः ।
कण्ठस्थानस्वरे चाथ स्यादुकारो हरे हरौ ॥ १ ॥
ओष्ठस्थानस्वरे चाथ [illegible] ।
आकाशे दिवसे च द्युः पुमानात्मनि पौरुषे ॥ २ ॥

---

१ 'च' ग पाठः। २ 'उ' ग पाठः। ३ ... ग पाठः।

---

* '[illegible]' (पृ ३७०. श्लो. १०) इति [illegible]। २ ...

मास्तु मासे निशानाथे पुमध्यायः समाप्तवान् ॥ २३ ॥

इत्येकाक्षरकाण्डे पुल्लिङ्गाध्यायः ।

---

## अथैकाक्षरकाण्डे नपुंसकलिङ्गाध्यायः ।

अथ क्लीबे खमाकाशे स्वर्गे छिद्रे गृहेऽभके ।
नक्षत्रेन्द्रियर्योर्ब्रह्मण्यथ ह्वचित्तवक्षसोः ॥ १ ॥

इत्येकाक्षरकाण्डे नपुंसकलिङ्गाध्यायः ।

---

## अथैकाक्षरकाण्डे वाच्यलिङ्गाध्यायः ।

अथाभिधेयलिङ्गे स्तो द्वे एवैकाक्षरे मते ।
किं प्रश्नाक्षेपकुत्सानां वितर्कस्य च गोचरे ॥ १ ॥
युङ् सहाये द्वितीयादिसमसङ्ख्ये च वस्तुनि ॥ १½ ॥

इत्येकाक्षरकाण्डे वाच्यलिङ्गाध्यायः ।

---

## अथैकाक्षरकाण्डे नानालिङ्गाध्यायः ।

इडीद् च त्रिषु नाथे स्त्री मेदिन्यां कस्तु ना नगे ।
अर्कानिलविरिञ्चात्मशब्दबुद्धिमनस्स्वपि ॥ १ ॥
अजयस्तु शरीरेऽपि पुंस्येवैनमभाषत ।
कं नाम्न्यप्सु सुखे मूर्ध्नि गूर्नी यन्त्रे गुदे स्त्रियाम् ॥ २ ॥
गौर्नादित्ये बलीवर्दे क्रतुभेदर्षिभेदयोः ।
स्त्री तु स्याद् दिशि भारत्यां भूमौ च सुरभावपि ॥ ३ ॥

---

१. 'रश्मिभे' क. ग. घ. पाठः. २. 'र्यां' क घ. पाठः. ३. 'इत्यादिषु' घ. पाठः, 'इत्येवम' ग. पाठः. ४. 'ह्री' क. ग. घ. पाठः. ५. 'सु' ख. पाठः.

नृस्त्रियोः स्वर्गवज्राम्बुरश्मिदृग्बाणलोमसु ।
अश्वानां प्रग्रहेऽप्येष* यत्साधारणनामसु ॥ ४ ॥

प्रग्रहस्य मरीचेश्च समाम्नायेऽमुमामनत् ।
धनुर्गुणे सुषुम्णाख्यरश्मिभेदे च भास्वतः ॥ ५ ॥

द्वयोस्त्वश्वे तथा चाह स्कन्दस्वाम्यृक्षु भूरिशः ।
माधवाचार्यसूरिश्च §को अद्येत्यृचि भाषते ॥ ६ ॥

समाम्नाये समाम्नातः स्तोत्रनामसु स त्रिषु ।
विकारयोर्लक्षणया दुग्धाभिषवचर्मणोः ॥ ७ ॥

चर्मणो गोविकारस्य विकारे श्लेष्मसंज्ञके ।
नृस्त्रियोरविशेषेण कश्चिदेनं समामनत् ॥ ८ ॥

अथ चित् स्यात् स्त्रिया ज्ञाने ज्ञातरि त्वेष भेद्यवत् ।
अथच्छिच्छेदने स्त्री स्याच्छेत्तरि त्वेष भेद्यवत् ॥ ९ ॥

आत्मचान्द्रमसायन्योऽर्ना ज्ञो ज्ञातरि तु त्रिषु ।
जूर्जवे स्त्री राक्षसे द्वे त्वशब्दोऽर्थे पुमांस्तु तु ॥ १० ॥

एकार्थे युष्मदर्थे च तेशब्दः क्रीडने स्त्रियाम् ।
क्रीडके त्रिषु सूर्ये तु दिवित्येष ध्वनिः पुमान् ॥ ११ ॥

स्त्री खे स्वर्गे च दृक् तु स्त्री ज्ञानदर्शनबुद्धिषु ।
नेत्रे च त्रिषु तु द्रष्टृज्ञात्रो‡र्नृ द्वे हरे हये ॥ १२ ॥

यदा त्वस्य स्त्रियां वृत्तिस्तदा नारीति दृश्यताम् ।
दिग्देशकालविषये पूर्वेऽर्वाचि च भेद्यवत् ॥ १३ ॥

प्राग्भवे प्राङ् सुरे चैव प्राची तु स्त्री हरेर्दिशि ।
प्रथमापञ्चमीसप्तम्यर्थेष्वव्यय एव वा ॥ १४ ॥

---

* अजयः । §-, 'को अद्य युङ्क्ते धुरि गा ऋतस्य' (अष्ट. १. अध्या. ६. वर्ग. ८) इलस्वामृचि । § मन्दम.शब्दद्वितयं दे. । ‡ अविभक्तिको निर्देशः ।

सर्वेषु पूर्वोक्तार्थेष्वित्येवं प्राक्छब्द ईरितः ।
मेषादिराशौ नक्षत्रे वैयाकरणसंज्ञिनि ॥ १५ ॥
क्लीबं भं भा तु मासि स्त्री भोजराजेन संस्कृता ।
राद् स्त्री छन्दोविशेषे स्याद् द्वाविंशत्यक्षरेऽथ ना ॥ १६ ॥
पार्थिवे क्रतुभेदे च रैशब्दो धनरुक्मयोः ।
नृस्त्रियोर्नाम्बुदेऽथ द्वे विः खगे त्रिषु गन्तरि ॥ १७ ॥
परमात्मनि नाथ स्त्री विद् ज्ञाने ज्ञातरि त्रिषु ।
ना रौहिणेये विद् तु स्त्रीशण्डयोर्गूढवाचि(नि?नी) ॥ १८ ॥
अङ्गुल्यां स्त्री समाम्नाये समाम्नाताज(ने? ये)न च ।
द्वयोर्मनुष्ये वैश्ये च स्वं स्वात्मात्मीययोस्त्रिषु ॥ १९ ॥
धने तु नप् पुमान् ज्ञातौ तकारान्तं तु सत् त्रिषु ।
सत्ये साधौ विद्यमाने प्रशस्तेऽभ्यर्हिते बुधे ॥ २० ॥
शोभने च सती तु स्त्री तुवरीसंज्ञभेषजे ।
लक्ष्मीपतिमताशैलतनयासु चतुर्ष्वथ ॥ २१ ॥
शब्देऽपि कश्चित् सच्छब्दस्तस्य लिङ्गं विचार्यताम् ।
सज्जनस्त्वेनमाम्नासीन्नक्षत्रे तन्नपुंसकम् ॥ २२ ॥
परब्रह्मणि नीरे च वयं ब्रूमो नपुंसकम् ।
सेशब्दः सेवने स्त्री स्यात् सेवके वाच्यलिङ्गकः ॥ २३ ॥

इत्येकाक्षरकाण्डे नानालिङ्गाध्यायः ।

एकाक्षरकाण्डः समाप्तः ।

---

१. 'नप्' ख. घ. पाठः. २. 'न्नाद्गुण' क. ख. घ. पाठः

# अथ द्व्यक्षरकाण्डः ।

## स्त्रीलिङ्गाध्यायः ।

अथ स्त्रियां भवान्याः स्युः सर्वाः संज्ञाः क्षुमाह्वये ।
धान्ये रात्रेर्हरिद्राया भूमेर्मूत्रस्त्वाल्यभेषजे ॥ १ ॥
मातुस्तु गवि पेषण्याः पार्वत्या चाथ योषित ।
प्रियङ्गुवृक्षेऽथाम्बा स्याज्ज्येष्ठस्वसरि मातरि ॥ २ ॥
वाचा मध्यमिकाना स्यात् ससानामेकवाचि च ।
अर्चा पूजाप्रतिमयोरत्ता श्वश्रूा च मातरि ॥ ३ ॥
नाट्योक्तविषये ज्येष्ठभगिन्यामिति केचन ।
नाट्योक्ताविध वृद्धाया वेश्यायामिति सज्जन ॥ ४ ॥
अम्बा नद्या भये रागेऽप्यभ्रा तु व्योमतोययो. ।
अश्रिस्तु कोट्या धारायामङ्घ्री तु स्यात् फलास्थनि ॥ ५ ॥
जानुकूर्परयोरष्ठीरन्दूस्तु गजशृङ्खले ।
पादभूषणभेदे च स्यादास्था त्ववलम्बने ॥ ६ ॥
प्रतिज्ञायत्नतात्पर्यगोष्ठीषु स्यादथापरे ।
आह्वा कण्ठे कथाया चेत्याहुराह्वा तु नामनि ॥ ७ ॥
कण्ठे चेत्यपरेऽथाशिरु*क्तया लिङ्गभेदत ।
आशिः प्रत्ययितत्वे स्याल्लाभसम्बन्धयोरपि ॥ ८ ॥
आलिमर्थत्रये विद्यात् सेतौ सख्या तथैव च ।
आवलाविप्यथालुः स्याद् योनिर्व्याधी वनस्पतौ ॥ ९ ॥
टिट्टिभाग्न्यलगे चाद्रत् पुनर्योगादिकर्मणाम् ।
फल्ये च परिवाट्या च साम्नो गायत्रसन्निन· ॥ १० ॥
द्वितीयपादगीत्या च तृतीयार्चिकपर्वणो· ।
आवृत्तावपि चाथाशीर्हिताशसाहिदंष्ट्रयोः ॥ ११ ॥

---

१ 'च' ख पाठ ।

---

* उक्तमेव नानालिङ्गाध्याये बोध्य ।

अपीच्छायामिरा तु स्यात् सुराया सलिले दिवि ।
दैत्यास्त्रे न क्षितौ वाचि स्यादिला तु गवि क्षितौ ॥ १२ ॥
दिवि वाच्यार्ध्यनाड्योश्च देवताबुधभार्ययो ।
इज्या तु यागे पूजाया जनन्यामपि सज्जने ॥ १३ ॥
इष्टिर्यागेच्छयोरीषा रथसीरादिदण्डके ।
प्रमाणभेदे भगवानष्टाशीतिशताङ्गुले ॥ १४ ॥
ईहा तु वाञ्छोद्यमयोरीतिर्डिम्बप्रवासयो ।
उमा कीर्त्यामतस्या च गिरिजाया श्रियामपि ॥ १५ ॥
ऊतिस्तु रक्षणे स्यूतौ चेत्येके ततु नो तथा ।
वय तु ब्रूम ऊशब्दकथितैकोनविंशतौ ॥ १६ ॥
अर्थेषु स्यात् तथा स्यूतौ चेत्यथो ऋद्धिरोषधौ ।
ऋद्धिरित्येव विख्याता या वृद्धिरिति चापरा ॥ १७ ॥
तस्यामपि विभूतौ च कक्ष्या साम्यवरत्रयो ।
कच्छाख्यगुल्मवल्ले च काञ्च्या गेहप्रकोष्ठके ॥ १८ ॥
पार्श्वाद्यङ्गसमुद्भूतरोगभेदेऽङ्गुलावपि ।
कथाख्यानाह्वयग्रन्थविशेषे कथनेऽपि च ॥ १९ ॥
कन्था ग्रामे च भित्तौ च बहुचीरकनाम्नके ।
कन्या तु गरराशौ स्यात् प्रियङ्ग्वाख्यमहीरुहे ॥ २० ॥
कुमार्यां शारिकाया च तरणीसञ्ज्ञगुल्मके ।
कर्षी हाटकपुत्र्या स्यादपि शालापलालयो ॥ २१ ॥
कम्बूस्तु कुकविन्दे स्याद् मृगणे च स्तरावपि ।
यजुरुष्णिग्विशेषे स्याद् भूभृत दिग्गजे दिशि ॥ २२ ॥
वाचि चैकौजपद्याशश्चार्ये मन्त्रे तु भूमनि ।
कान्तिः शोभेच्छयो काञ्ची मेखलापुरभेदयो ॥ २३ ॥

---

१ 'त' क घ पाठ   २ कान' क ग घ पाठ   ३ न रा पाठ.   ४ 'ष' क घ पाठ

क्षिया क्षये तथाचारातिक्रमेऽथ क्षितिर्भुवि ।
मनुष्ये क्षयणे गेहे वासकर्मण्यथो किखिः ॥ २४ ॥
कालगोत्रविशेषेऽपि क्रोष्टुजात्यन्तरेऽल्पके ।
क्रीडा नर्मणि लीलायामपि क्रेणिस्तु निक्रये ॥ २५ ॥
परिग्रहे च क्षेत्रादेः फलभोगाय तन्वते ।
दत्त्वा किञ्चित् कियन्तञ्चित् कालं क्रोणिस्तु वक्ष्यते ॥ २६ ॥
चापाग्रे चाग्रमात्रेऽश्रौ प्रकृपे जकले तथा ।
सङ्ख्याविशेषे लक्षाणां शते क्षोणी पुनर्भुवि ॥ २७ ॥
मौर्व्या च मेखलायां स्यात् क्षोणी इति तु रोदसी ।
खट्वा पर्यङ्क आचार्यासने त्वन्ये वदन्ति ताम् ॥ २८ ॥
आयुर्वेदप्रसिद्धे च व्रणबन्धनयन्त्रके ।
खर्जूर्विद्युति कण्डूा च गतिर्नाडीव्रणे पथि ॥ २९ ॥
उपाये च दशायां च विशब्दे सामर्थ्यलिङ्ग ।
गन्तव्ये पुण्यपापाभ्यां प्रस्थाने शरणेऽपि च ॥ ३० ॥
माधुर्यादिप्रभृतिषु क्रियायुक्तेषु चेष्यते ।
गाथा तु वाण्यामार्यायां पिङ्गलानुक्तनामसु ॥ ३१ ॥
वृत्तेष्वनुष्टुबाद्येषु यानि वृत्तानि पञ्चसु ।
पादेश्चतुर्भिः पञ्चभिर्वा तेष्वप्यपिद्धतेष्वसौ ॥ ३२ ॥
गुप्तिः क्षितिव्युदासे स्यात् कारायां गोपनेऽपि च ।
गृष्टिः सकृत्प्रसूतायां गवि काश्मर्यपादपे ॥ ३३ ॥
विष्वक्सेनप्रियासञ्ज्ञस्थावरे चाप्यथो घृणा ।
जुगुप्सायां दयायां च चाग्निस्तु मुखमणौ ॥ ३४ ॥
रोगभेदे पशुना च रमणीयेऽथ मूर्धनि ।
चूडा शिखायामथो चूलिस्तु धनुषोऽग्रौ ॥ ३५ ॥

१ टय न' क प पाठ २ य क प पाठ ३ तिक' क घ पाठ, ' ग पाठ ४ ता' क घ पाठ ६ च' स, 'य' ग, 'प' ह पाठ
'ह' क ख प पाठ

पिटके चेति विद्वांसः केचिदाचक्षतेतमाम् ।
छविश्चर्मणि शोभायां दीप्तौ यज्वाद्विजन्मनाम् ॥ ३६ ॥

वेधामास्तरणे चाथच्छायानातपशोभयोः ।
सूर्यपत्न्यन्तरे गेहे स्यात् पङ्क्तिप्रतिबिम्बयोः ॥ ३७ ॥

जातिः समूहे मालत्यां सामान्ये जन्मगोत्रयोः ।
ब्राह्मणादिषु वर्णेषु वेदार्थे सर्वजन्तुषु ॥ ३८ ॥

स्वभावे प्रभवे छन्दोभेदेष्वार्यादिकेष्वपि ।
ज्यानिस्तु हानौ वृद्धौ च रोगे जिह्वा तु वाचि च ॥ ३९ ॥

ज्वालायां रसने चाथ मञ्जिष्ठासंज्ञभेषजे ।
जिह्वी दीर्घफलायां च कोशातक्यामथो जुहूः ॥ ४० ॥

स्रुग्वंशेपे पुरोडाशेऽप्यथ ज्योत्स्ना शशिद्युतौ ।
ज्योतिष्मद्रजनौ चाथ झिल्ली चीर्याख्यकीटके ॥ ४१ ॥

अपि दग्धोदनेऽथ स्यात् तन्द्रा निद्राप्रमीलयोः ।
तन्द्रिस्तु सुप्तावालस्ये तन्त्रीर्वीणादिनो गुणे ॥ ४२ ॥

रज्जौ सिरायामालस्ये गुडूच्यामिति पञ्चसु ।
तण्डूर्द्रोणिप्लवे दर्व्यां ताडिराभरणान्तरे ॥ ४३ ॥

तरुभेदेऽप्यथ तुला सादृश्योन्मानदण्डयोः ।
स्तम्भपीठे पलशते तथा राशौ च सप्तमे ॥ ४४ ॥

तुण्डीरास्ये शूननाभौ त्रुटिः संशयलेशयोः ।
सूक्ष्मैलायामर्धमात्राकालेऽपीत्यपरेऽपठन् ॥ ४५ ॥

तूलिः शय्यान्तरे चित्रकूर्चिकायां च सा पुनः ।
इच्छापिपासयोस्तृष्णा तृप्तिस्तु सुखतोययोः ॥ ४६ ॥

---

१. 'ट' ख. ग. पाठः. २. 'श' ख. ग. पाठः. ३. 'त्र' क. घ. पाठः.

सौहित्ये चाप्यथ त्रेता गार्हपत्यादिकत्रये ।
द्वितीये च युगेऽथ स्याद् दीक्षा यजनपूजयो ॥ ४७ ॥
व्रतादेशे च नियमे मौण्ड्ये चोपनयेऽपि च ।
दृष्टिशब्दोऽक्षिण बुद्धौ च ज्ञाने दर्शे दृषत् पुन ॥ ४८ ॥
पेषण्यामश्ममात्रे च दृग्भूस्तु तरुसर्पयो ।
बिले च द्रोहकजने क्रतेऽथो नीलिकाह्वये ॥ ४९ ॥
दोला स्याद्दोपधिस्तम्बे प्रेङ्खे चाथोत्तमास्त्रियाम् ।
धनुर्धनुर्गुणे चान्ये धनुष्यपि पठन्ति ताम् ॥ ५० ॥
धारा प्रवाहे नद्यादे सैन्याग्रे द्रवसन्ततौ ।
वाचि शस्त्रमुखेऽश्वानां गतिष्वास्कन्दितादिषु ॥ ५१ ॥
धाना भ्रष्टयवे चापि फलबीजे च भूरुहाम् ।
ध्राजिः पिटकजातौ स्याद् वात्यायामपि केचन ॥ ५२ ॥
धीता बुद्धौ सुतायां च कन्यायामिति कश्चन ।
धीतिः स्यादङ्गुलौ पानेऽप्यागारे च व्यवस्थितौ ॥ ५३ ॥
धृतिर्धारणमन्तोषधैर्यशौर्येषु सौख्यके ।
द्वासप्तत्यक्षरच्छन्दोविशेषे पिङ्गलोऽन्वशात् ॥ ५४ ॥
नानान्दृशब्दस्तु भार्याया जनन्या दुहितर्यपि ।
नासा तु नासिकायां स्याद् गृहद्वारोर्ध्वदारुणि ॥ ५५ ॥
नाडिस्त्वर्धमुहूर्ते स्यान्नालव्रणविशेषयो ।
सच्छिद्रदीर्घद्रव्ये च सिरायां चाति पञ्चसु ॥ ५६ ॥
नालिर्नाडीव्रणे नाले घमन्यर्धमुहूर्तयो ।
आयते सुषिरद्रव्ये तथैवार्थेषु पञ्चसु ॥ ५७ ॥
नान्दिः कल्याणवृद्धौ स्यान्नाट्यारम्भार्चनान्तरे ।
निष्ठोत्कर्षेऽप्यवस्थायां नाशेऽन्ते व्रतयाच्ञयो ॥ ५८ ॥

---

१ नें क घ पाठ

स्यान्निर्वहणनिष्पत्त्योः परमायां गतौ तथा ।
क्लेशे च कल्कवत्योश्चेत्यर्थेषु द्वादशस्त्वसौ ॥ ५९ ॥

निशा रात्रौ हरिद्रायां निन्दा कुत्सापवादयोः ।
निधा निधाने पाश्यायां पाश्या पाशकदम्बकम् ॥ ६० ॥

नीवी स्यात् कवचे वस्त्रे वणिङ्मूलधने तथा ।
स्त्रीकटीवसनग्रन्थौ नृशुः प्रतिकृतौ प्लवे ॥ ६१ ॥

कश्चिद् दीर्घकिमावाह नेमिस्तु तिमिशद्रुमे ।
चक्रप्रान्ते भित्तिमूले कूपे तन्मुखबन्धने ॥ ६२ ॥

पीनाहसंज्ञ इत्येके परिच्छेदेऽपि कश्चन ।
वज्रेऽप्याह समाम्नायः प्रभा त्वर्चिषि भासि च ॥ ६३ ॥

सूर्यपत्नीविशेषेऽथ प्रजा सूनौ जनेऽप्यथ ।
पल्लिः कुटीरेऽल्पग्राम आश्रमे व्याधमन्दिरे ॥ ६४ ॥

प्राणिभेदे च मुसलीसंज्ञेऽथो पङ्क्तिरावलौ ।
चत्वारिंशत्स्वराद्येषु छन्दोभेदेषु सा तथा ॥ ६५ ॥

एकत्वे दशसङ्ख्यायां तत्सङ्ख्येषु च वस्तुषु ।
दशकस्य यदा द्वित्वत्रित्वे तद्वचस्तदा ॥ ६६ ॥

पक्तिस्तु गौरवे पाकेऽथाश्वायां मातरि प्रसूः ।
पारिः स्नगिगुणे षण्ढ्यां पालिश्चिह्नाश्रिपङ्क्तिषु ॥ ६७ ॥

सेती कर्णलतायां च प्रदेशे च तरुच्छदे ।
जातश्मश्रुस्त्रियां क्षेत्रे वप्रेऽथ प्रास्तिवागियम् ॥ ६८ ॥

उदयेऽधिगमे चाथ पादुं केचित् प्रचक्षते ।
पादुकोपानहोः स्यादित्येवं शब्दविशारदाः ॥ ६९ ॥

---

* 'तिमिशस्तु तिमिशो नेमी' (पृ. ४८, श्लो. ८६) इति वैजयन्ती । 'नेमिर्ना तिनिशद्रुमे' इति तु मेदिनी ।

पीडा कृपाशिरोमालाव्यथासु भीतिवाक् पुन ।
प्रेम्णि हर्षेऽप्यथ प्रेक्षा प्रज्ञाया नृत्तदर्शने ॥ ७० ॥

पोला तु परिखाया च कवाटस्य च बन्धने ।
तालसञ्ज्ञेऽथ पोटा स्यात् स्त्रीपुंसाङ्कनपुंसके ॥ ७१ ॥

स्त्रिया च राज्यपालिन्या दास्या चाथ बलिध्वनि ।
योनौ वायौ च भस्त्रा तु वह्निध्मानदृतावपि ॥ ७२ ॥

भेदे सप्तदशस्तोमविच्युतेरिपुधावपि ।
भक्तिर्भागे सेव्यमाने लक्षणाया च सेवने ॥ ७३ ॥

भङ्गिर्भङ्गेऽप्याकृतौ च विच्छित्तौ चाथ भाषणे ।
भाषा लौकिकवाक्ये चाभियोगवचने गिरि ॥ ७४ ॥

भिक्षा तु भिक्षितद्रव्ये देयान्ने ग्रासमानके ।
भृतियाचनसेवासु भित्ति त्वजय आमनत् ॥ ७५ ॥

कुड्यप्रदेशयो स्यात् तु भूमिः क्ष्मास्थानमात्रयो ।
भूतिर्भस्मनि सम्पत्तावुत्पत्तौ मरुटेऽपि च ॥ ७६ ॥

भृतिस्तु धारणे पोषे भृतकादेश्च वेतने ।
मतिर्बुद्धीच्छयोर्मारि*स्तरपत्रसिरास्वपि ॥ ७७ ॥

कवचे चाथ मारिः स्यान्मसूरीसञ्ज्ञके गदे ।
सर्वलोकतते मृत्यौ तथा स्याद् देवतान्तरे ॥ ७८ ॥

अथो मिसिः स्यान्मिश्रेयासमाख्ये भेषजान्तरे ।
शतपुष्पासमाख्ये च वर्तते भेषजान्तरे ॥ ७९ ॥

मुक्तिः स्वर्गेऽपवर्गे च मूर्तिः काठिन्यकाययो ।
काकप्रतिमयोश्चाथ सङ्कल्पे वाचि मेनिवाक् ॥ ८० ॥

---

१ 'ग्रु' क घ पाठ   २ 'धा' क घ पाठ

---

* 'पत्रमध्यशिरा मारि' (पु ४६ श्लो १८), 'मारि स्त्री जागरा वक्षश्छद सन्नाहवर्मणी ।' (पु ११६ श्लो १४३) इति वैजयन्ती ।

यात्रा तु वर्तने गत्यामथ याच्ञानुवर्तने ।
प्रार्थनेऽप्यथ युक्तिः स्यादुपपत्तौ च योजने ॥ ८१ ॥
समाधावथ रक्षा स्याल्लाक्षारक्षणभस्मसु ।
रतिः कन्दर्पभार्यायां सुरतोत्कण्ठयोरपि ॥ ८२ ॥
रागेऽपि परमप्रीतौ रज्जुस्तु स्याद् वराटके ।
अष्टहस्तप्रमाणे च रास्ना तु सुवहाह्वये ॥ ८३ ॥
भेषजे चापि धेनौ च राठा सुक्षेपु नीवृति ।
शोभायां चाथ राजिः स्यात् क्षेत्रेऽधो रसनस्य च ॥ ८४ ॥
पङ्क्तौ च राजसर्पे च लेखायां च करादिषु ।
रीतिर्दग्धसुवर्णादिमले स्थित्यारकूटयोः ॥ ८५ ॥
प्रचारे स्रवणे पङ्क्तौ स्वभावेऽन्ये तु पित्तले ।
रुजा भङ्गजरामृत्युरोगेष्वथ रुचिः श्रियाम् ॥ ८६ ॥
अभिष्वङ्गेऽभिलाषेऽशौ दीप्तौ स्याद् देवतान्तरे ।
शोभायां तिन्त्रिणीकायाः फले वृक्षाम्लसंज्ञके ॥ ८७ ॥
रेखा तु कृत्रिमे मार्गे हस्तपादतलादिषु ।
निरन्तरालपङ्क्तौ च वदन्ति विदितागमाः ॥ ८८ ॥
रेटिर्वह्नेश्च रटिते संयतोत्कटवाचि च ।
तिन्त्रिटीके स्पृहायां च तथा कान्त्यर्चिषोरपि ॥ ८९ ॥
लता तु वल्ल्यां शाखायां प्रियङ्गुस्पृक्कयोरपि ।
लतावृहत्यामपि च ज्योतिष्मत्यतिमुक्तयोः ॥ ९० ॥
शारिवायामपि प्राह कश्चित् तच्च विरोचले ।
लङ्का तु तरुशाखायां रावणस्य च पत्तने ॥ ९१ ॥
लक्ष्मीः श्रीभूतिशोभासु वृद्धिसंज्ञे च भेषजे ।
ऋद्धिसंज्ञे च कस्याञ्चिद् विष्णोर्नवसु शक्तिषु ॥ ९२ ॥

---

१. 'ष' ख. ग. पाठः. २. 'न्त्रि' क. ग. पाठः. ३. 'न्त्रि' ग. पाठः. ४. 'प्रसतां धा' ख. पाठः.

लवङ्गे चाथ लीला स्याद् विलासक्रीडयोरपि ।
लूता पिपीलिकायां स्यादूर्णनाभेऽप्यथो वपा ॥ ९३ ॥
रन्ध्रे मेदसि च व्रज्या वर्गे पर्यटने गतौ ।
वलिर्जठररेखायां जराप्रशिथिलत्वचि ॥ ९४ ॥
ऊर्मौ च गृहदारौ च वधूः स्त्रीमात्रभार्ययोः ।
नवोढयोषास्नुषयोः भार्यायां पूर्वजस्य च ॥ ९५ ॥
स्पृक्कानयोश्च विद्या तु शास्त्रविज्ञानयोरपि ।
शैवागमप्रसिद्धेषु तत्त्वभेदेषु केषुचित् ॥ ९६ ॥
मन्त्रेषु चाप्यथासत्या विहगे च विहाय्यनिम् ।
धनञ्जयो जगादाथ विद्युत् स्यात् क्षणरोचिषि ॥ ९७ ॥
मनश्शिलायां वीथी तु गृहाङ्गे पङ्क्तिमार्गयोः ।
रूपकाणां तथैकस्मिन् वीरुत् तु स्थावरान्तरे ॥ ९८ ॥
गुल्माख्येऽपि मतान्यिन्या लतायां वृत्तिवाक् पुनः ।
कृष्यादौ वर्तनेऽप्यारभट्यादिचतसृष्वपि ॥ ९९ ॥
शब्दोच्चारणधर्मेषु द्रुतमध्यादिषु त्रिषु ।
ऋक्पादस्याप्युपान्तेऽप्यप्रतिबन्धप्रवर्तने ॥ १०० ॥
व्याख्याने ग्रन्थभेदे च सामगीतिगुणान्तरे ।
सम्भक्तौ चापरे त्वाहुर्गणेऽपि विचक्षणाः ॥ १०१ ॥
वृद्धिस्त्वादैक्षु वृद्ध्याख्यभेषजे वर्धने सुखे ।
ऋणातिरिक्तदातव्ये मयोक्ते पुत्रजन्मनि ॥ १०२ ॥
शुष्करूप्यात्मके वध्मसंज्ञे रोगान्तरेऽपि च ।
वेणिर्व्योघौ केशबन्धे जनन्या च सरित्यपि ॥ १०३ ॥
शङ्का वितर्कभययोः शंसा तूक्तौ स्तुतावपि ।
इच्छायां चाजयः प्राह सदसत् स्मर्यते यतः ॥ १०४ ॥

---

१. 'व्यसौ' ख पाठः.

आङ्पूर्वस्यैव शब्दज्ञै शसेरिच्छार्थताचिता ।
श्रद्धा स्पृहायामास्तिक्ये मन्यन्ते तु विशेषत ॥ १०५ ॥
गर्भिण्या अपि वाञ्छाया श्वश्रूः श्वशुरयोषिति ।
पितृष्वसार स्वस्यार्थं व्याचष्टे शाकटायन ॥ १०६ ॥
शरत् सवत्सरे मेघात्यये शान्तिस्तु मङ्गले ।
चिकित्साया शमे चाथ शिम्बिर्निष्पावनामनि ॥ १०७ ॥
वल्कया शम्या तथा शीर्णिस्त्वङ्गे विशरणे रुजि ।
शुण्डा सलीलहस्तिन्या मदिराहस्तिहस्तयो ॥ १०८ ॥
श्रुतिस्तु वेदे श्रवणक्रियाया श्रोत्र एव च ।
गीतिधर्मविशेषे च शब्दे चाप्यभिधायके ॥ १०९ ॥
श्रोणिः कट्यामुपस्थेऽथ संस्था स्यादाकृतौ मृतौ ।
व्यवस्थाया समाप्तौ च प्रणिधावपि केचन ॥ ११० ॥
संज्ञाभिधाने सङ्केते हस्ताद्यैरर्थसूचने ।
सूर्यभार्यान्तरे बुद्धौ चेतनाया च तत्र च ॥ १११ ॥
उपांशु यत्तं क्रियते सेप्वनीकेषु विग्रहे ।
सन्धानयो प्रतिज्ञाया सन्ध्यासन्धानकर्मणो ॥ ११२ ॥
स्वसृशब्द समाम्नातो भगिन्यामङ्गुलावपि ।
सरिद्वधा तथा छन्दोभेदे द्वासप्ततिस्वरे ॥ ११३ ॥
संयद् युद्धेऽग्निचित्याया द्वादशस्विष्टकासु च ।
संसत् सदसि सत्राख्यक्रतुना त्वेपि भूमनि ॥ ११४ ॥
चतुर्विंशतिरात्रे द्वे तयो पूर्वत्र ससद ।
संविद् युद्धे प्रतिज्ञाया सङ्केताचारनामसु ॥ ११५ ॥
सभाषणे क्रियाकारे ज्ञानतोषणयोरपि ।
संपद् भूती गुणोत्कर्षे स्वाहाभेय्या च वाचि च ॥ ११६ ॥

---

१ 'त्र' क ख ङ पाठ   २ 'चाथ भू' क ग घ पाठ

अव्ययं तु हविर्दाने सातिर्दानावसानयो ।
वेदनायां च तीव्रायामथ स्थितिरिति ध्वनि ॥ ११७ ॥
व्यवस्थायामवस्थाया क्रियायामपि तिष्ठते ।
सिद्धिस्तूच्चार्यवृद्ध्याख्यभेषजद्वितये गतौ ॥ ११८ ॥
सराद्धावथ सीता स्यात् पृथिव्या हलपद्धतौ ।
सस्ये हरितसस्येऽन्ये सस्यभूमावितीतर ॥ ११९ ॥
सुमेरुशिरस प्राग्दिग्गतगङ्गान्तरेऽपि च ।
जानक्यामथ सीमा स्यादवधौ भूमिकूलयो ॥ १२० ॥
क्षेत्रव्यवस्थयोश्चेति द्वावन्तार्थौ समीरितौ ।
मन्नन्तापि च सीमास्ति तस्याश्चार्था इमे मता ॥ १२१ ॥
अदन्तोऽप्यस्ति सीम स नानालिङ्गेषु वक्ष्यते ।
ईक्ष्यास्तदर्थास्तत्राथ सुधा सौहित्यमूर्वयो ॥ १२२ ॥
गङ्गेष्टिकाया चुक्यादिलेपद्रव्यान्तरेऽमृते ।
स्नुह्या स्थूणा तु गेहस्य स्तम्भे वातादिषु त्रिषु ॥ १२३ ॥
लोहप्रतिकृतौ तन्त्रधारिण्यामिति पस्पूवदि ।
रश्मिमेखलयो स्थूना सृष्टिस्त्यागस्वभावयो ॥ १२४ ॥
उत्पादने चाथ सृतिर्मार्गे च गमनेऽपि च ।
स्मृतिस्तु धर्मशास्त्रे स्यादुत्कण्ठाचिन्तयोरपि ॥ १२५ ॥
हिंसा चौर्यादिके जातेऽथा प्रस्तावविलासयो ।
अवज्ञाया च हेलाथ होरा लग्नार्धलग्नयो ॥ १२६ ॥
अहोरात्रे च पूर्णाऽयमध्यायो द्व्यक्षरास्त्रिया ॥ १२६३ ॥

इति द्व्यक्षरकाण्डे स्त्रीलिङ्गाध्याय ।

---

१ 'रत' क ग घ

## अथ द्व्यक्षरकाण्डे पुल्लिङ्गाध्यायः ।

अथ पुंसि विरिञ्चाख्या रुद्राक्षे स्युश्चतुर्मुखे ।
तस्मिन् पञ्चमुखे शम्भो कुमारस्य तु षण्मुखे ॥ १ ॥
गुग्गुलुल्लककुटजेष्विन्द्रस्याग्नेस्तु चित्रके ।
भल्लातकेऽप्यथार्कस्य भल्लातक्यर्कपर्णयो ॥ २ ॥
कर्पूरकाम्पिल्लकयोरिन्दोर्वज्रस्य हीरके ।
कुबेरस्य तु पर्याया वन्दाके* क्षीरवृक्षजे ॥ ३ ॥
मुस्तेऽभ्रकेऽम्बुदस्याथ शैलेये धरणीभृत ।
अर्थः फले धने शास्त्रे वस्तुमात्रे प्रयोजने ॥ ४ ॥
हृदये साधने मोक्षे कार्यैश्वर्यनिवृत्तिषु ।
वाच्ये हेतावभिप्राये याचने च हलायुध ॥ ५ ॥
अङ्कः समीप उत्सङ्गे चिह्ने स्थानापराधयो ।
रूपकाणां विशेषे च नाटकादेश्च पर्वसु ॥ ६ ॥
उरस्यर्घस्तु पूजायां मूल्येऽप्यब्दस्तु वारिदे ।
वत्सरे मुस्तकेऽथाब्द (‡)पुरोडाशर्षिभेदयो ॥ ७ ॥
वृक्षावयवभेदे च स्यादगो गिरिवृक्षयो ।
अभ्रोऽभ्रे भूरेऽश्राभो ‡ (‡)वाय्रावातमन्यथार्कवाक् ॥ ८ ॥
व्याधौ शशाङ्केऽप्यद्रिस्तु शैले सूर्ये द्रुमेऽम्बुदे ।
अङ्घ्रि पादपमूले च प्राणिनां चरणेऽपि च ॥ ९ ॥
अन्धुरूथसि कूपेऽपि व्रणेऽंशुस्त्वविधिवपयो ।
असुध्वनिस्तु प्रज्ञायामसवो भूम्नि जीविते ॥ १० ॥
असुस्तु याचके कालेऽप्यश्मा पाषाणमेघयो ।
आधिर्मानसपीडायामधिष्ठाने तथैव च ॥ ११ ॥

---

* वृक्षोपरिजाते लताविशेषे । ‡ 'अथाब्दु' इति पाठ स्यात् ।

व्यसने वन्धके चेति चतुर्ष्वर्थेषु कीर्तित ।
आत्मार्कचन्द्रवाताग्निजीवेषु परमात्मनि ॥ १२ ॥
देहे यत्ने धृतौ कीर्तौ बुद्धौ मनसि च श्रुते ।
धर्मे स्वभावे पुत्रेऽर्थे परस्य प्रतियोगिनि ॥ १३ ॥
इन्द्र पुरन्दरे सूर्ये सूर्येषु द्वादशस्वपि ।
विशेषत स्यादेकस्मिन् परमात्मनि पादपे ॥ १४ ॥
अश्मन्तकाह्वये क्ष्वेडविशेषे इति परस्त्वयम् ।
पत्यौ च नामपूर्वोऽथो इध्मो वायुवसन्तयो ॥ १५ ॥
उत्सो व्योम्न्यम्बुधौ कूपे जलाधारान्तरेऽपि च ।
ऊष्मा त्वौष्ण्यगुणे ग्रीष्मे बाष्पे शपसहेषु च ॥ १६ ॥
ऋषिर्वेदे वसिष्ठादौ चक्षुरादीन्द्रियेषु च ।
ज्ञानवृद्धे क्षपणकेऽप्यृतुस्तु शिशिरादिषु ॥ १७ ॥
गर्भग्रहणयोग्ये च काले स्त्रीणा रजस्यपि ।
ओघः परम्पराया स्याज्जलस्रोतसि सञ्चये ॥ १८ ॥
महाजलसमूहे च बाधादिद्रुतवर्तने ।
क्षणस्त्वनसरे मध्ये पारतन्त्र्ये तथोत्सवे ॥ १९ ॥
मुहूर्ते षष्ठभागे च नाड्या कालेऽतिसूक्ष्मके ।
निर्व्यापारस्थितौ चाथ कण्ठः शब्देऽन्तिके गले ॥ २० ॥
क्षवस्तु राजिकायाम्नसर्षपे क्षवथावपि ।
क्षयस्त्वपचये कुक्षौ कल्पान्ते राजयक्ष्मणि ॥ २१ ॥
क्रियाया वसतेर्धातोर्हिंसाया गमनेऽपि च ।
मन्दिरे चाथ कल्पः स्यान्न्याये देवद्रुमे[2] विधौ ॥ २२ ॥
विभीतके विकल्पे च संवर्ते ब्रह्मणो दिने ।
शास्त्रजातिविशेषे च सामर्थ्ये वर्णने तथा ॥ २३ ॥

---

१ 'दे' ग पाठ २ 'पे' क ग घ पाठ

छेदने कारणौपम्याधिवासेष्वथ कवेवाक्[1] ।
अपाठि निष्पत्तिक्षेत्रे[2] कन्दर्पे चेति कैश्चन ॥ २४ ॥
कलिर्विभीतके तस्य फलेऽनर्थे च सयुगे ।
कलिर्निश्रीरिति प्राह शब्दविच्छाकटायन ॥ २५ ॥
विवादमात्रे स्वजय कलिशब्दमभाषत ।
युगे चतुर्थे चालक्ष्म्या कलरूपेषु धातुषु ॥ २६ ॥
कषिर्निकषपाषाणे धातौ स्यात् कपलावपि ।
अश्वकर्णाख्यवृक्षे च काष्ठे चाथ क्रतुर्मखे ॥ २७ ॥
प्रज्ञाक्रियासङ्कल्पेष्वप्यथ काचोऽक्षिसभवे ।
उपतापविशेषे स्यात् तथा मृद्भेदशिक्ययो ॥ २८ ॥
शिलाया[3] चाथ काशि: स्यान्मुष्टौ काशाह्वये तृणे ।
धातौ च काशतौ भूम्नि लेप स्यान्नीवृदन्तरे ॥ २९ ॥
किणो रूढव्रणस्थाने तथा स्यादासनान्तरे ।
लक्षण चासनस्याम्य वैजयन्त्या यथाभ्यधात् ॥ ३० ॥
पद्मासनस्थे पदयो पाणिना पृष्ठगामिना ।
वामेन दक्षिणाङ्गुष्ठ वाम तन्येन पीडयेत् ॥ ३१ ॥
वेतालामनमित्येतदेकाङ्गुष्ठमहात् किण ।
क्षुरस्तु कोकिलाक्षाख्यस्तम्बे गोक्षुरनाम्नि च ॥ ३२ ॥
नापितस्योपकरणे कुटिस्तु[4] नृपलालये ।
पापे वृक्षेऽपि कुभ्रस्तु समुद्रे पर्वतेऽपि च ॥ ३३ ॥
कुक्षिस्तुन्देऽन्तरुदरपार्श्वयोरपि दृश्यते ।
इक्ष्वाको पूर्वराजस्य पुत्रे कस्मिंश्चिदप्यसौ ॥ ३४ ॥
कृष्मा[5] तु वाताभावे च शल्ये च क्षेपधाक् पुन ।
क्षितिनिन्दावहेलेषु केतुस्तु ध्वजचिह्नयो ॥ ३५ ॥

१. 'मे' क घ पाठ २ 'ति' ख पाठ ३ 'ली' क घ पाठ ४ 'स्य' ख पाठ. ५ 'ठि' क ख घ पाठ ६ 'कुष्ठा तु' ख पाठ

प्रज्ञायां ग्रहभेदे च किरणे क्रेदुवाक्[1] पुनः ।
भङ्गे चन्द्रे शरीरे च क्षेत्रेऽथौषधिचन्द्रयोः ॥ ३६ ॥
मुखप्रसेके च क्रेदः क्षोदो रजसि चूर्णने ।
क्षोदशब्दः समाम्नाये पठितो जलवाचकः ॥ ३७ ॥
कोरो वृक्षाङ्कुरे बालपुष्पे चाथ खुरः शफे ।
शुक्तिसञ्ज्ञौषधे चाथ खेदिः स्यात् किरणे तथा ॥ ३८ ॥
रश्मौ तुरङ्गमस्याथ गर्भोऽपवरकालये ।
अन्नेऽग्नौ कुक्षिकुक्षिस्थजन्त्वोः पनसकण्टके ॥ ३९ ॥
शिशावपत्ये शुक्रे च समूहे सारबीजयोः ।
गन्धस्तु गन्धवद्द्रव्ये चन्दनादौ महीगुणे ॥ ४० ॥
घ्राणस्य विषये लेशे तथा सम्ब(न्धि ? न्ध)मात्रके ‡ ।
गणो बहुत्वसङ्ख्यायां गणने प्रमथे व्रजे ॥ ४१ ॥
ऋषिभेदे सैन्यभेदे गुल्मास्यात् त्रिगुणे * ध्वनौ ।
अजयस्य क्वचिद् ग्रन्थे दृश्यते प्रमथे चले ॥ ४२ ॥
इत्येवं तस्य याथात्म्यं समूलत्वं च चिन्त्यताम् ।
गर्तस्तु स्यात् सभास्थाणौ मन्दिरेऽप्यवटेऽपि च ॥ ४३ ॥
ग्रन्थस्तु शास्त्रे द्रविणे द्वात्रिंशद्वर्णसञ्चये ।
वचस्यथ ग्रन्थिरिक्षुवेण्वादेः काण्डयोर्द्वयोः ॥ ४४ ॥
सन्धौ ग्रन्थनदेशे च रज्जुवस्त्रादिवस्तुनः ।
रोगभेदेऽप्यथ गरुत् पक्षिपक्षे च तेजसि ॥ ४५ ॥
सङ्घाते च जवे चाथ ग्रामो गीतिस्वरान्तरे ।
शब्दभूतादिपूर्वस्तु व्रजे सवसथे तथा ॥ ४६ ॥

---

1. 'के' क ग घ पाठः.

---

‡ 'गन्ध सम्बन्धलेशयोः' इति हैम. । * 'त्रैगुण्यात् स्युर्धाकरम् । सेनामुखं गुल्मगणौ' (पृ १०८ श्लो. ५७, ५८) इति वैजयन्ती ।

ग्रावा शैलशिलाश्रेषु गुणो मौर्व्यप्रधानयोः ।
उपकारे सूपकारे तन्तुरज्ज्विन्द्रियेषु च ॥ ४७ ॥
सत्त्वादौ भाग आवृत्तौ सन्ध्यादौ द्रव्यमाश्रिते ।
महाभूतेषु शौर्यादौ दोषस्य प्रतियोगिनि ॥ ४८ ॥
भारवाहकभेदे च वृद्धनाम्नौ च गोण्डवाक् ।
घर्मः स्वेदजले ग्रीष्म उष्णे दिवस आतपे ॥ ४९ ॥
यज्ञे हविर्विशेषे च ‡महावीरश्रुतेऽश्विनोः ।
चयः समूहे प्राकारमूलके चयनेऽप्यथ ॥ ५० ॥
चरुः स्थाल्यां हव्यपाके मेघेऽथ च्यूपवाग् रवौ ।
वाते युद्धे छदस्तु स्यात् पक्षिपक्षेऽप्यवारणे ॥ ५१ ॥
वृक्षपत्रेऽप्यथच्छन्दो वशेऽभिप्रायवाञ्छयोः ।
ज्वरस्तु व्याधिमात्रे च हरकोपसमुद्भवे ॥ ५२ ॥
रोगराजेऽप्यथो जन्तुः प्राणिमात्रे नरे त्वपि ।
उक्तो निरुक्तेऽथ ज्ञातिरिक्ष्वाकुकुलसंभवे ॥ ५३ ॥
नृपभेदेऽप्यथो जायुः पित्ते स्याद् भेषजेऽपि च ।
जिनस्त्वर्हति शाक्ये च जूटस्तु निकुरम्बके ॥ ५४ ॥
केशविन्यासभेदेऽथ जोषः प्रीतौ च सेवने ।
झाटः स्थावरभेदे च सङ्घातेऽप्यथ डिम्बवाक् ॥ ५५ ॥
डमरे पक्षिणामण्डेऽन्तःकुक्ष्यवयवान्तरे ।
भागुरिः प्लीहनि प्राह तच्चिन्त्यं वैद्यके यतः ॥ ५६ ॥
भेदेनोपदिशन्त्येनौ शारीरे मुनिपुङ्गवाः ।
तंप*स्तु बन्धनोपाये वीतंसाख्ये पतत्रिणाम् ॥ ५७ ॥

१. 'ण्व' क. घ. पाठः. २. 'चू' ख. पाठः. ३. 'ट' क. ख. ङ. पाठः.
४. 'तस्प' क. घ., 'तर्प' ग., 'त्रस्प' ङ. पाठः.

‡ 'महावीरो यज्ञपात्रे । (पु. २७८. श्लो. २०) इति वैजयन्ती । * 'तस' इति स्यात् । 'वीतंसस्तूपकरणं बन्धने मृगपक्षिणाम्' इत्यमरः ।

रवौ तर्कस्तु काङ्क्षोहवितर्केष्वथ तर्कुवाक् ।
सूत्रवेष्टशलाकायामनलाधारभाजने ॥५८॥
शेफरयपीति शब्दज्ञास्त्रिष्वर्थेषु स्मरन्त्यमुम् ।
त्रासो भये मणेर्दोषे त्यागो दाने समुज्झने ॥५९॥
तुस्तः प्रदीपने चैव जटायामपि कश्चन ।
तूकः पर्वतजातौ स्यादुपस्थे चाप्यथो तूर्पत् ॥६०॥
तृणभूमौ समुद्रे च चन्द्रे चाप्यथ दर्शवाक् ।
दर्शनेऽपरपक्षान्तकार्येवैदिककर्मणि ॥६१॥
अमावास्यातिथौ चाथ दम इन्द्रियनिग्रहे ।
दण्डे गृहे दवस्त्वग्नौ वनवह्न्युपतापयोः ॥६२॥
दावो दवाग्नावग्नौ च द्रुमस्त्वखिलशाखिषु ।
नान्दिवृक्षे पारिजाते दर्तिस्त्वम्बुदजिह्वयोः ॥६३॥
भस्त्रायां चर्मखण्डे च ऋषिभेदेऽथ धातुवाक् ।
ओदनानडुहोर्धातुशब्दस्तु धनलोहयोः ॥६४॥
स्वर्णे रेतसि पाषाणे शरीरे गैरिके रसे ।
अस्थ्नि स्वभाव आकारे स्याद् भूवादिसुवन्तयोः ॥६५॥
वातादिशब्दस्यर्थादिगैरिकादिस्त्वगादिषु ।
महाभूतेष्विन्द्रियेषु पादे पञ्चाक्षरे तथा ॥६६॥
महानाम्न्यां त्रिधात्वादिवाक्येऽन्योऽर्थोऽस्य मृग्यताम् ।
नगो गिरौ तरौ नम्र ऋषौ नागाद्युरेऽप्यथ ॥६७॥
नमिर्नमतिशानौ च जैनतीर्थंकरान्तरे ।
स्याद् विद्याधरराजेऽथ नागो धर्मे पलायने ॥६८॥
मतान्तदर्शने नाभूः स्याद् वल्मीके वनस्पतौ ।
पक्षः पार्श्वगरुत्साध्यसहायबलभित्तिषु ॥६९॥

१. ...ग. ८८. २ ...क. ग. घ. ८८. ३ ...क. ख. ग. ८८.

पार्श्वद्वारे विरोधेऽर्धमासे चुल्लीबिलेऽन्तिके ।
हस्तिपार्श्वे परिज्ञाने केशशब्दात् परश्चये ॥ ७० ॥

पणो विक्रय्यशाकादिबद्धमुष्टौ ग्लहे धने ।
द्यूतेऽशीतौ वराटानां कार्षिकव्यवहारयो ॥ ७१ ॥

मूल्ये भृतौ व्यवस्थाया विक्रयेऽप्यथ पट्टवाक् ।
प्रशस्तक्षौमकौशेयाद्यम्बरे व्रणबन्धने ॥ ७२ ॥

शाणस्य‡ नेत्रे स्वर्णादिकृतदीर्घाच्छपत्रके ।
गुवाकनालिकेरादिपत्रमूलेस्थवेष्टके ॥ ७३ ॥

पर्पः शङ्खेऽम्बुधौ वत्से पुक्षस्तु तरुषु त्रिपु ।
अश्वत्थे पर्कटीसञ्ज्ञे गर्दभाण्डेऽप्यथो पविः ॥ ७४ ॥

वज्रे शस्त्रमुखे वायौ द्वयर्थे त्वव्यय पशु ।
पुमान् मृगादौ छगले हयेनन्दी त्ववोचत ॥ ७५ ॥

प्रान्त्येऽप्यमुक्तात्मसु तु बय ऋमोऽथ पादवाक् ।
किरणे चरणे वृक्षमूलेऽद्रे प्रान्तपर्वते ॥ ७६ ॥

तुर्यभागे पद्यभागे परिमाणान्तरेऽपि च ।
प्रासस्तु प्रासने कुन्तसमाख्ये चायुधान्तरे ॥ ७७ ॥

पाणिः पलचतुर्भागे हस्तेऽप्यथ मगे गुदे ।
पायुः पाप्मा तु रोगे च दुरितेऽप्यथ पिण्डवाक् ॥ ७८ ॥

निष्पीडितस्नेहपिण्डे पिष्टधानादिचूर्णके ।
पिचुस्तूले कर्षमाने पितुस्त्वत्रविरिञ्चयोः ॥ ७९ ॥

---

१. 'न्धे' क ग घ पाठ. २ 'लादिवेष्टने' क घ, 'स्थास्थिवेष्टने' ग पाठ
३. 'ल.' क घ, 'वे' ग पाठ

---

‡ 'पट्टो नेत्रेऽपि शाणे स्यात्' (पु. २१६ श्लो ३४) इति वैजयन्ती । 'पट्टः पेषणपाषाणे व्रणादीनां च बन्धने । चतुष्पथे च राजादिशासनान्तरपीठयो ॥' इति मेदिनी । 'पट्टश्चतुष्पथ पीठे राजादेः शासनान्तरे । व्रणादिबन्धने पेषाश्मनि' इति हेमचन्द्रश्च ।

सूर्येऽपि सज्जन पीकः पुनर्योनौ जलाशये ।
प्रुश्निः स्यादुदपानेऽग्नौ पुश्निरग्निकुसूलयो ॥ ८० ॥
अन्नसङ्ग्रामयो पृक्षं समाम्नाये समामनत् ।
प्रैपस्तु प्रेषणे मर्दे बन्धस्त्वाधौ च बन्धने ॥ ८१ ॥
सीसाख्यलोहभेदे च वैजयन्त्यामपाठि स ।
प्रुभ्रः प्रजापतौ रुद्रे पृष्ठान्ते स्वर्गतुण्डयो ॥ ८२ ॥
वृक्षादेरप्यवाग्भागे भ्रमस्तु विचिकित्सने ।
मिथ्याज्ञाने गृहादेश्च निर्गमद्वारि वारिण ॥ ८३ ॥
शस्त्रमार्जनयन्त्रे च तथा भ्रमणकर्मणि ।
अदन्तो भर्गशब्दोऽय सामभेदे महेश्वरे ॥ ८४ ॥
भरस्त्वतिशये भारे सङ्ग्रामे गरिमण्यपि ।
भारः सहस्रद्वितये पलाना च गरिम्णि च ॥ ८५ ॥
वोढव्ये भरणे चाथ ज्येष्ठभ्रातरि भास्करे ।
भावोऽथ भातृवाग् देवे शरीरावयवेऽपि च ॥ ८६ ॥
भुजिर्भुनक्तिधातौ स्यात् पावके भुजतावपि ।
भुजस्तु गरुडेऽर्काम्न्योर्भ्रूणस्त्वर्भकमूपयो ॥ ८७ ॥
गर्भिण्या स्त्रैणगर्भे च ब्राह्मण्या श्रोत्रियद्विजे ।
आर्ये यतौ च केचित् तु माहुर्ब्राह्मणमात्रके ॥ ८८ ॥
भूभृद् गिरौ नृपेऽथाद्रितट ऋष्यन्तरे भृगुः ।
भेदो विशेषे व्यावृत्तावुपजापे विदारणे ॥ ८९ ॥
भेनस्तु चन्द्रे सूर्ये च भोगो राज्ये धने सुखे ।
रक्षणेऽभ्यवहारे च सर्पस्य फणकाययो ॥ ९० ॥
वेदयादीना भृतौ चापि कौटिल्येऽप्यथ मन्त्रवाक् ।
ऋग्यजु प्रभृतौ गूढभाषणेऽप्यथ मन्थने ॥ ९१ ॥

---

१ 'पृ' क घ पाठ   २ 'रि' क घ पाठ

मन्थो मथनदण्डे च द्रवसिक्तेषु सक्तुषु।
मखो यज्ञे यशस्कामसत्रयाजिसुरान्तरे ॥ ९२ ॥

मरुस्तु निर्जले देशे शैले चेक्ष्वाकुवंशजे।
पितामहेऽम्बरीषस्य नृपेऽपि च नृपान्तरे ॥ ९३ ॥

सोमवंशजहर्यश्वपुत्रे मुन्मि तु नीवृति।
दशेरकाख्ये मन्थी तु भास्करे राहुचन्द्रयोः ॥ ९४ ॥

गृहाख्यसोमपात्राणामेकस्मिन् यज्ञकारिणाम्।
माथस्तु मथने मार्गे मोक्षस्तु स्याद् विमोचने ॥ ९५ ॥

अपवर्गे च मृत्यौ च मुष्कराख्यद्रुमान्तरे।
मोहः पुनः स्यादज्ञाने मूर्छायां क्रोध एव च ॥ ९६ ॥

अजयस्त्वाह तन्द्रायामपि यज्ञस्तु केशवे।
अभावात्मनि योगे च यक्ष्मस्तु व्याधिमात्रके ॥ ९७ ॥

क्षयरोगे पूजने च यक्ष्मा तु व्याधिमात्रके।
क्षयरोगे च यागस्तु यज्ञेऽप्यागमवेदिनाम् ॥ ९८ ॥

शैवानां प्रथितेषु स्यात् सर्वतोभद्रकादिषु।
मण्डलेष्वथ यावः स्यान्मासेऽलक्तकसंज्ञके ॥ ९९ ॥

रागद्रव्ये च योगस्तु ध्यानयोजनकर्मणि।
भेषजे सङ्गतौ प्राप्तौ जवे विस्रब्धघातिनि ॥ १०० ॥

केचित् सन्नहनोपाय इत्येकार्थं प्रचक्षते।
अन्ये सन्नहनेऽप्याहुरुपाये चेति केचन ॥ १०१ ॥

रदो विलेखने दन्तेऽप्यथादन्तो रजध्वनिः।
रजस्संज्ञगुणे पांसौ स्त्रीपुष्पेऽप्यजयोऽब्रवीत् ॥ १०२ ॥

रागोऽनुरागे मात्सर्ये रक्तवर्णे रजस्यपि।
लाक्षादिरञ्जनद्रव्ये दीप्तौ क्लेशादिकेऽपि च ॥ १०३ ॥

अजयस्तु वदत्यत्र लोहितादिष्वितीदृशम् ।
गीतिधर्मविशेषे च लवस्तुच्छेदकर्मणि ॥ १०४ ॥

लेशो कालविशेषे च काष्ठाया द्विगुणेऽथ स. ।
लिङ्गुर्गोत्रान्तरे मस्तौ चित्ते लेपस्तु भोजने ॥ १०५ ॥

लिप्तिक्रियाया लोकस्तु स्थानविष्टपयोर्जने ।
वर्गः समाना निवहे वज्रे शक्त्याह्वये बले ॥ १०६ ॥

तावत्कृत्वः कृतौ चाथ च(र्णो? र्णुः)जनपदान्तरे ।
वेदे नदविशेषे च सहस्रकिरणेऽपि च ॥ १०७ ॥

वारः क्रियाभ्यावृत्तौ स्यात् समूहेऽवसरे तथा ।
कालभेदे नृपादीना चारे चेत्याह कश्चन ॥ १०८ ॥

वाजोऽन्ने पक्षिपक्षे च वेगे सङ्ग्रामरेतसो ।
इषुच्छदावलौ चैके व्याजश्छद्मापदेशयो ॥ १०९ ॥

विधिर्दैवे विरिञ्चे च काले कल्पे विधानके ।
विधातर्यप्यथो विष्णुर्मखे यज्ञे च केशवे ॥ ११० ॥

तस्यावतारभेदे च वामनाख्येऽशुमालिनाम् ।
द्वादशानामन्यतमे चन्द्रे च व्रीहिवाह् पुन ॥ १११ ॥

धान्यमात्रे षष्टिकादिधान्यभेदेऽप्यथ व्रजे ।
विन्यासे च व्यूहशब्दो निर्यन्तेऽपीति कश्चन ॥ ११२ ॥

वृष आर्द्रक ओषध्या मेढ्रे च लशुनेऽपि च ।
वृषौ तु शुष्कफलयोः कोष्ठावयवभेदयोः ॥ ११३ ॥

वृषा तु वृषभे शक्रे श्रेष्ठे पुंसि तुरङ्गमे ।
छन्दोभेदे निदानोक्तेऽप्यष्टपञ्चाशदक्षरे ॥ ११४ ॥

वीर्ये सोमविशेषेऽथ वेगः किम्पाकरंहसोः ।
प्रवाहे च प्रभावे च धाते रेतसि चाप्यथ ॥ ११५ ॥

वेपः क्रियायामारम्भे वेणुर्वंशद्रुमे नृपे ।
शब्दोऽक्षरे यशोगीत्योर्वाक्ये स्वे श्रवणे ध्वनौ ॥ ११६ ।

शम्बो वज्रे लोहमये वलये मुसलाग्रगे ।
अरित्रेऽर्थान्तरेऽप्यस्ति शम्बबीजात् कृषाविति* ॥ ११७ ॥
शण्डो नपुंसके दाक्षि चेत्येकेषामिदं मतम् ।
एष च प्रतिपत्तव्यस्तालव्योष्मादिवर्णकः ॥ ११८ ॥
शक्रः कुटजवृक्षे च महेन्द्रेऽप्यथ शम्भुवाक् ।
हरे हरौ विरिञ्चे च स्यादर्हत्यथ शापवाक् ॥ ११९ ॥
आक्रोशे शपथे चाथ शास्ता बुद्धे गुरौ नृपे ।
महाशास्तरि च स्यात् तु शिपिः किरणशेफयोः ॥ १२० ॥
अथ शुक्षिर्निदाघे स्यान्मातरिश्वनि चाप्यथ ।
श्लेष्मा कफे चर्मणश्च विकारे ढक्काह्वये ॥ १२१ ॥
रथस्य शीघ्रवहनसाधने चापि वस्तुनि ।
श्लोकः पद्ये यशोवाचोः षण्ड इद्वरषण्डयोः ॥ १२२ ॥
इत्यन्येषां मतं सोऽयं मूर्धन्योष्मादिरीरितः ।
एष वर्षवरे नीलवृषोत्सर्गे च कीर्तितः ॥ १२३ ॥
पिङ्गो वेश्यापतावुक्तो वेश्याचार्येऽपि कैश्चन ।
प्लवमश्चन्द्रे जले रश्मौ तन्तौ मङ्गल इत्यपि ॥ १२४ ॥
वैजयन्त्यामपाठ्येवं तच्चासभ्यं न रोचते ।
यथा स पठितुं युक्तस्तथान्त्याध्याय ईक्ष्यताम् ॥ १२५ ॥
सर्गोऽध्याये स्वभावे च निर्माणे च समुज्झने ।
उत्साहे निश्चये चाथ स्कन्धः समुदये चये ॥ १२६ ॥
अंसे महीपतौ वृक्षमहाविटपमूलके ।
स्कन्दो विरिञ्चे तीरे च नद्याः स्तम्बस्तु संहतौ ॥ १२७ ॥
तृणे च विटपे चाथ स्तम्भः स्यात् प्रतिबन्धने ।
स्थूणायां च जडीभावे स्पर्शस्तु प्रणिधौ युधि ॥ १२८ ॥

---

१. 'च' क घ. पाठः.

---

* 'कृञो द्वितीयतृतीयशम्बबीजात् कृषौ' (५. ४. ५८) शम्बशब्दः प्रतिलोमे ।

स्रवस्तु सूतौ सूत्यायां स्रुतौ यागे च वर्तने[1] ।
स्वप्नः सुप्तस्य विज्ञाने स्वापे सन्धिस्तु रन्ध्रके ॥ १२९ ॥
अन्त्यस्तोमेऽतिरात्रस्य श्लेषे भङ्गसुरुङ्गयोः ।
नाट्याङ्गेऽथ स्वरुर्यूपशकले कुलिशेऽपि च ॥ १३० ॥
स्वभूर्विष्णौ विरिञ्चेऽथ साद्यश्वारोहसूतयोः ।
*स्तीभिः[2] समुद्रे हृदये स्फीतिर्वृ(क्षःद्ध) उदाश्विति ॥ १३१ ॥
सृणिस्तु वह्नौ कुलिशे सुह्मा जनपदान्तरे ।
सुह्मि तस्य नृपे सर्ववचनोऽथासुरान्तरे ॥ १३२ ॥
स्याद् दारुलेखके सुन्दः स्तूपो वायौ समुच्छ्रये ।
संयुगोपायतनयोर्मूर्धमध्यगुडे पशोः ॥ १३३ ॥
सूरः सूर्ये गभस्तौ च स्वेदस्तु स्वेदवारिणि ।
स्वेदनायां तथा स्विचिकित्सायामथ सेतुवाक् ॥ १३४ ॥
वरणाख्यद्रुमे वारिबन्धेऽप्यायतने तथा ।
स्नेहुः पित्ते तथा रोगविशेषे सन्निपातगे ॥ १३५ ॥
स्नेहो† वसायां गोस्याङ्गे स्तोमस्तु स्तोतृवृन्दयोः ।
सङ्घायां यज्ञगस्तोत्रस्तोत्रियाणां क्रतावपि ॥ १३६ ॥
देयभेदेऽध्वमाने च दशधन्वन्तराह्वये ।
हवस्तु यज्ञ आज्ञायामाह्वाने वह्निहोमयोः ॥ १३७ ॥
हठः पाण्यां बलात्कारे जलोद्भवतृणान्तरे ।
वारिपर्णीसमाख्येऽथ महात्मभीमसूत्सुषु ॥ १३८ ॥
हनुर्हेलिस्तु मार्ताण्डे तथोक्त उपगूहने ।
उत्पत्तौ कारणे वादे निमित्ते बीजकर्मणि ॥ १३९ ॥

---

१. 'ते' क घ. ङ. पाठः. २. 'स्तम्भिः' ग, 'स्तम्भिः' ख घ ङ पाठः. ३. 'स्तिमि' ख, 'स्फीतिः' क घ ङ पाठः. ४. 'ह्रा' ख पाठः. ५ 'गोस्वार्ते' क घ., 'गोस्वार्ते' ग, 'स्वोस्वार्ते' ङ. पाठः. ६ 'वे' क, ग घ पाठः

---

* 'स्तिम्भिः' इति बृहदभिधाने, 'स्तम्भिः' इति वैजयन्त्यां च समुद्रवाचिनो दृश्यते ।
† 'स्नेहस्तु वैद्य. स्रोतो मूत्रं वेतः पशा तथा । मज्जा च' इति वैदकम् ।

पञ्चस्वेषु पदार्थेषु हेतुर्वररुचीरिति ।
प्रयोजके स्वतन्त्रस्य कर्तुरित्यपि शाब्दिका ॥ १४० ॥

इति त्र्यक्षरकाण्डे पुंलिङ्गाध्याय ।

---

## अथ त्र्यक्षरकाण्डे नपुंसकलिङ्गाध्यायः ।

अथ क्लीबेऽभिधानानि सर्वाणि कुमुदस्य हि ।
रजतेऽतिदिशन्त्यार्या रुधिरस्य तु कुङ्कुमे ॥ १ ॥
रूप्यस्याञ्जनभेदे स्युर्बदरस्य तु नागरे ।
अथाभ्रशब्दो जलदे व्योममुस्तकयोरपि ॥ २ ॥
अभ्रकाख्यधातावप्यस्त्रमायुधचापयो ।
अघं तु व्यसने पापे दु खेऽथ स्यादलम्बनि ॥ ३ ॥
हरिताले वृश्चिकस्य पुच्छकण्टक एव च ।
अक्षि नेत्रे तथेक्ष्वादे काण्डस्यावयवान्तरे ॥ ४ ॥
अम्बुच्छन्दोविशेषे स्यान्नवत्यक्षरलक्षिते ।
लग्नाच्चतुर्थे राशौ स्यादिति सावत्सरा विदु ॥ ५ ॥
ह्रीबेरे सलिलेऽथ स्यादम्भो ह्रीबेरतोययो ।
व्यशीतिस्वरके छन्दस्यष्टाशीत्यक्षरे तथा ॥ ६ ॥
अम्भसी इति तु द्यावापृथिव्योर्द्विवचोन्तकम् ।
अर्णश्छन्दोविशेषेऽष्टसप्ततिस्वरके जले ॥ ७ ॥
अनोऽन्ने शकटे सान्त ओदने सलिलेऽपि च ।
अर्शो दुर्नामनि व्याधिमात्रेऽप्यङ्कस्तु सयुगे ॥ ८ ॥
स्याङ्गभेदेऽपि चाब्जस्तु रूपे कश्चित् सरोरुहे ।
अर्मस्तु रूपेऽपत्ये च क्रियायामप्यथो अयः[1] ॥ ९ ॥

---

१ 'प्र' क ख घ पाट.

कालायसे सुवर्णे च स्यादाज्यं तु घृते युधि ।
श्रीवेष्टाह्वयनिर्यासे स्तोत्रेषु च चतुर्थ्र्यपि ॥ १० ॥
स्युर्बहिष्पवमानाद्यान्यूर्ध्वान्यध्वरकर्मणाम् ।
उन्मानभेदे च पलसञ्ज्ञेऽप्येतदपाठिषु ॥ ११ ॥
आढं तु रश्मावाकाशेऽप्यागः पापापराधयोः ।
रहस्ये चोक्थशब्दस्तु सामस्तोत्रेषु च त्रिषु ॥ १२ ॥
परेष्वग्निष्टोमसाम्न औक्थिक्यर्थे सामलक्षणे ।
वैजयन्त्यां तु शस्त्राख्ययागमन्त्रेषु भाषितम् ॥ १३ ॥
अन्ये स्ववैदिका आहुः सामवेदस्य वाचकम् ।
सज्जनं छण्डदेन साम्नः पर्याय एव हि ॥ १४ ॥
उरो वक्षसि मुख्येऽथ गजादीनां स्तनास्पदे ।
ऊधः सीमाख्यसाम्नश्च पादभेदे तथा निशि ॥ १५ ॥
एनः पापेऽपराधे च स्यादोजो बलतोययोः ।
दीप्तौ प्रकाशेऽवष्टम्भे काव्यालङ्कारभेदके ॥ १६ ॥
ओको गृहे जलौकायामाश्रये चाथ भूषणे ।
फण्वं पर्वणि क्लिन्नं तु नम्रहृत्सन्नवस्तुनि ॥ १७ ॥
पिण्याके चाथ दुर्दिने क्षुमं कण्टकिगुल्मके ।
कूलं तीरे चमूपृष्ठ्यां तटाके स्तूप एव च ॥ १८ ॥
क्षेत्रं पृथिव्यामाकाशे शरीरे योनिरन्ध्रयोः ।
केदारदारागारेषु नक्षत्रे पुरि राशिषु ॥ १९ ॥
पुण्यस्थाने च खात्रं तु चोरनिर्मितरन्ध्रके ।
कुद्दालेऽप्यथ गात्रं स्यात् तनोरवयवे तनौ ॥ २० ॥
गजानां पूर्वजङ्घादिपादयोर्ग्ये गात्रवाक् ।
टङ्के यानेऽप्यथो चर्म फलकाग्न्यास्त्रवारणे ॥ २१ ॥

---

१ 'पुच' क ग घ पाठः. २ 'स' क ग घ पाठः. ३ 'मे' ख ग पाठः.
४ 'रो' क घ पाठः. ५ 'स' क घ पाठः.

त्वचि चिह्नं त्वभिज्ञाने पताकायामथो हृदि ।
प्रज्ञायामपि चित्तं स्याच्चोचं तु स्यात् तरुत्वचि ॥ २२ ॥

भृङ्गाख्यगन्धद्रव्येऽथच्छद्मस्खलितयोश्छलम् ।
छन्दः श्रुतीच्छापद्येषु सामगानां विशेषके[1] ॥ २३ ॥

अनूहसामग्रन्थेऽथेच्छद्म सद्मनि कैतवे ।
छदिस्तु पटले गेहे जन्म तूत्पत्तितोययोः ॥ २४ ॥

जीलं करकपत्र्यां स्यात् कोशे चर्मपुटे दृतौ ।
तन्त्रं स्वराष्ट्रव्यापारे तन्तुवाने[3]‡ परिच्छदे ॥ २५ ॥

शास्त्रौषधान्तमुख्येषु प्रयोगेऽध्वरकर्मणाम् ।
एकस्यैवोभयार्थत्वे कुटुम्बव्यापृतावपि ॥ २६ ॥

सेनायां सामसूत्रे च सिद्धान्तेऽन्यकुटुम्बके ।
क्रतुकर्माभिवादानामृक्सामानां समागमे ॥ २७ ॥

तल्पं शय्याट्टदारेषु भद्रे* युद्धेऽप्यथ त्रपु ।
वङ्गे सीसेऽप्यथ तरो बले वेगे तनुस्त्रिवदम् ॥ २८ ॥

विस्तारे च शरीरे च तेजस्तु बलतोययोः ।
नवनीतेऽनले धर्मे ज्योतिष्यर्चिषि रेतसि ॥ २९ ॥

प्रभावे पौरुषे सत्त्वे ज्वलत्यन्नात्मनोरपि ।
तोकं पुत्रे च पुत्र्यां च द्रव्यं स्वर्णे गुणाश्रये ॥ ३० ॥

औषधे पित्तले योग्यजवसामेभ्यिरिगामिषु ।
दानं हस्तिमदे त्यागे खण्डने लवने क्षये ॥ ३१ ॥

---

१. 'ठः' क. ख. घ पाठः. २. 'च' क. ग. घ. पाठः. ३. 'ग' क. घ. पाठः, 'पे' ख. ङ. पाठः. ४. 'कर्माभि' ग. पाठः. ५ 'सी' क. घ पाठः.

---

‡ 'तन्त्रं स्वराष्ट्रव्यापारे तन्तुवाने परिच्छदे' (पृ. २२४. पं. ११) इति वैजयन्ती ।
* मौञ्जिगमे ।

शोधने रक्षणे चाथ द्वारं द्वाराभ्युपाययो ।
द्युम्नं धने यशस्यन्ने बले दैन्यध्वनि पुन ॥ ३२ ॥

दीनताया च शोके च द्यौत्रशब्दस्तु वासरे ।
प्रमाणेऽन्ये प्रतोदेऽन्ये ज्योतिष्यथ धनं भवेत् ॥ ३३ ॥

लग्नाद् द्वितीयराशौ च स्वापतेये च गोव्रजे ।
धामं स्वदन्न तिलकतेजसोर्धाम तु त्विषि ॥ ३४ ॥

गेहदेहप्रभावान्नभोजनव्योमजन्मसु ।
स्थानेऽधिकरणे सारे धने लक्ष्मणि चाप्यथ ॥ ३५ ॥

शाखाया त्वपि वैचित्र्ये नान्तशब्द प्रचक्षते ।
पदमङ्गौ शरे त्राणे व्यवसायापदेशयो ॥ ३६ ॥

चिह्नेऽङ्घ्रिचिह्नेऽङ्घ्रि यासे पथभागेऽशुवस्तुनो ।
स्थाने वाक्ये सुप्तिङन्ते माने पञ्चदशाङ्गुलौ ॥ ३७ ॥

इन्द्रपुच्छेलि वर्गस्याप्यादितस्त्रिपु सामसु ।
पत्रं तु गार्हपत्येऽपि पिठरे पक्ष्मवाक् पुन ॥ ३८ ॥

पुष्पच्छदे पक्षिपक्षे तथा नयनलोमसु ।
किञ्जल्के तन्तुतूलादेरणीयोवयवेऽपि च ॥ ३९ ॥

पयः सामान्तरे दुग्धे रजन्यामन्नतोययो ।
परिरिश्नादिकमन्थो धर्मे पाजो बलान्नयो ॥ ४० ॥

पाथः स्थानान्नयाम्भस्सु पाथिः स्वर्गेन्दुपूषसु ।
तथा ज्योतिष्यथो पिञ्छं मयूरस्य[१] शिखण्डके ॥ ४१ ॥

विहङ्गपक्ष्ममात्रे च पृष्ठं तु चरम तनो ।
चतुर्षु सामस्तोत्रेषु क्रतौ सामान्तरे कुचे ॥ ४२ ॥

पेशो रूपे हिरण्येऽथ सुन्दरस्य हलस्य च ।
पोत्र मुखाग्रे पार्श्वं तु बले युद्धेऽत्र वर्हवाक् ॥ ४३ ॥

१ यान्नी ग यान क ग घ पा

वृक्षपत्रे केकिपिञ्छेऽप्यथ बीजं फलास्थनि ।
अन्ने रेतस्यपत्ये च हेतावङ्कुरकारणे ॥ ४४ ॥

स्वर्णवेतनयोर्भर्म भर्गस्तेजसि रेतसि ।
भुवः सूर्ये लोकभेदे महस्तूत्सवतेजसोः ॥ ४५ ॥

जले चाथ मुखं वक्त्रे मुख्ये तास्वाभ्युपाययोः ।
आदौ निस्सरणे गेहपुरादीनां च सैन्धवे ॥ ४६ ॥

द्वारेऽथ देहिनां बीजे मेदो धातौ चतुर्थके ।
यशस्तु सत्त्वख्यातिश्रीज्ञानमाहात्म्यवारिषु ॥ ४७ ॥

धनप्रतापयोश्चाथ यजुर्यज्ञोत्सवे तथा ।
मन्त्रजातिविशेषे च योक्त्रं त्वङ्गुलियोक्त्रयोः ॥ ४८ ॥

रत्नं स्वजातिश्रेष्ठे च माणिक्यादिमणावपि ।
समाम्नाये समाम्नामीढने च सलिलेऽपि च ॥ ४९ ॥

रजस्तु शरदि स्त्रीणां पुष्पे रेणौ जले सजि ।
सत्त्वाद्यन्यतमे रात्रौ लोहे तेजसि रेतसि ॥ ५० ॥

अहन्यथ रहश्शब्दो मैथुने विजने तु तत् ।
अव्यये वाथ राधः स्यात् प्ररूढे च धनेऽपि च ॥ ५१ ॥

रिप्रं दुःखे च पापे चेत्याममनन्ति विचक्षणाः ।
रेतः शुक्रे जले चाथ रोधस्तीरान्तरिक्षयोः ॥ ५२ ॥

धरणे रन्धने कुड्ये रोधसी इति रोदसी ।
लतं पल्लव उद्याने लक्ष्म चिह्नप्रधानयोः ॥ ५३ ॥

स्यादुपच्छन्दने लालं गुह्यार्थपरमार्थयोः ।
लिङ्गं बुद्ध्यादिसहत्याः साङ्ख्यानां प्रकृतावपि ॥ ५४ ॥

स्त्रीपुंसादौ च सस्थाने शरीरे चिह्नशेफयोः ।
प्रग्रन्थ्यामवयवे वेपेऽप्यथ वनं जले ॥ ५५ ॥

---

१ पू' ख पाठ. २ क' ख पाठ ३ क्ष' क ग घ पाठ.

कानने गहने यज्ञे धनप्रीतिगभस्तिषु ।
वस्तु ग्रामनगर्यादिपदार्थे स्वापतेयके ॥ ५६ ॥

पदार्थमात्रेऽप्यस्यार्थे पण्डितः शाकटायनः ।
सन्दिसाह स्म वर्चस्तु विष्ठायामन्नतेजसोः ॥ ५७ ॥

लावण्येऽर्चिष्यथ वयो वत्सरे यौवने धने ।
अन्ने पक्षिणि बाल्यादौ जीवितेऽप्यथ वर्त्मवाक् ॥ ५८ ॥

मार्गे नेत्रच्छदे चाथ वर्म स्यात् कवचे गृहे ।
वपुः शरीरे लावण्ये जले दीप्तौ च सज्जनः ॥ ५९ ॥

वेश्म स्यान्मन्दिरे लग्नादपि राशौ तुरीयके ।
वैश्यं तु यक्षाति स्वर्गे गेहेऽपि परमात्मनि ॥ ६० ॥

व्योमशब्दं तु पद्मार्थं विद्यात् स्थाने जले दिशि ।
आकाशेऽक्षितसङ्ख्यायाः* सङ्ख्यायां दशकात्मनि ॥ ६१ ॥

शर्म्यं जले सुखे चाथ शकृद् गोमयविष्ठयोः ।
जले च शर्म तु सुखे गृहे चाथ श्वयो बले ॥ ६२ ॥

शोथे गदे श्रवस्त्वन्ने यशश्श्रोत्रवलेषु च ।
धने शास्त्रं तु विद्यायामाज्ञायां श्वाभ्रवाक् पुनः ॥ ६३ ॥

धने क्षिप्रेऽप्यथो शिल्पं कारुकर्मणि कर्मणि ।
कर्मान्तराणां निर्माणविज्ञाने शाकटायनः ॥ ६४ ॥

शिरो मूर्ध्नि पुरःसैन्ये सामस्तोत्रान्तरे तथा ।
प्रधानेऽप्यथ शीर्षं स्यान्मूर्ध्नि चागुरुसंज्ञके ॥ ६५ ॥

---

१. 'द' ग. पाठः. २. 'वय' ग. पाठः.

---

* 'वृन्दादिषु च पद्मसङ्ख्ये निम्नरे चन्द्रमण्डिनम् । व्योम चान्तश्च सर्वश' (पृ १८८, श्लो. ३०, ३१) इति वैजयन्ती ।

गन्धद्रव्येऽर्थे शैत्यं स्यान्नैशित्ये शौक्ल्यकार्ष्ण्ययोः ।
शीतलत्वे च शोचिस्तु पै[2](श!ङ्ग)ल्ये* शु(द्धि!ग्धि)शुद्धयोः ॥ ६६ ॥

रश्मौ ज्वलति शुद्धत्वेऽप्यथ शौर्यमिति ध्वनिः ।
लमात् तृतीयराशौ च शक्त्याह्वयबले तथा ॥ ६७ ॥

शूरस्य भावक्रिययोरथ सस्यमिति ध्वनिः ।
वृक्षादीनां फले धान्ये धान्यस्तम्बे गुणे त्वमुम् ॥ ६८ ॥

जयादित्योऽब्ददथो सत्रमाच्छादने वने ।
द्वादशाहादियज्ञेषु सदादानेऽथ सक्थिवाक् ॥ ६९ ॥

ऊरौ च शकटाङ्गे च कस्मिंश्चिदथ सद्मवाक् ।
गृहे जले च रोदस्योः सद्मनी इत्यथो जले ॥ ७० ॥

आज्ये च सर्पिः स्नानं तु स्नानीयाप्लवयोरथ ।
साम प्रगीतमन्त्रेषु सान्त्वसामप्रभेदयोः ॥ ७१ ॥

साध्वन्यथ जले स्रोतः प्रवाहे सरितामपि ।
अम्भसो निर्गमद्वार इन्द्रियेऽप्यथ हर्म्यवाक् ॥ ७२ ॥

प्रासादपृष्ठ इत्येके गृहभेदे गृहेऽपि च ।
हरः क्रोधे जले लोके ज्योतिषि ज्वलति स्रजि ॥ ७३ ॥

अग्निसामविशेषेषु पयस्यथ हविर्घृते ।
हव्ये जलेऽथ होत्रं स्याद् यजमानसमुद्रयोः ॥ ७४ ॥

होमहव्येऽग्निहोत्रस्य शालायां चेत्यपूर्वयम् ॥ ७४½ ॥

इति द्व्यक्षरकाण्डे नपुंसकलिङ्गाध्यायः ।

---

१. 'च' क. प. ड. पाठः. २. 'पै' ख. प. पाठः. ३. 'द्धि' ख. ड., 'द्धि' ग. पाठः.

* 'शोचिः शोकांशुवैगल्यशुद्धत्वेषु' (पु २२६. श्लो. १५) इति वैजयन्ती ।

त्रि तु बह्वाशिनि घृतं त्वाज्ये तोये च नपुंपरे ।
पुंस्यप्याहुर्घृणिस्तु स्यान्ना स्त्रियामपि केचन ॥ ३८८ ॥

रश्मौ ज्वाले निदाघेऽह्नि वीच्यां घोणा तु सा स्त्रियाम् ।
नासिकाया हयप्रोथे जलस्योपरि गत्वरे ॥ ३८९ ॥

कुम्भीरमक्षिकासञ्ज्ञे क्षुद्रजन्तावथो नरि ।
*इत्वरे घूर्णने चाथ घोरस्त्रिषु भयानके ॥ ३९० ॥

कष्ट इत्यपरे द्वे तु सृगाले स्त्री तु कुङ्कुमे ।
घोलस्तु ना कपाले स्यात् स्त्री दण्डाहतके तु स ॥ ३९१ ॥

मर्त्यजात्यन्तरे वेश्यघर्घरीजे द्वयोरथ ।
घोष आभीरपल्लौ ना शब्दे वाचि स्वरे परे ॥ ३९२ ॥

मत्स्यवालुकसञ्ज्ञे च विषभेदे लतान्तरे ।
कोशातक्याह्वये शब्दवर्णधर्मेऽप्यथास्त्रियाम् ॥ ३९३ ॥

कांस्यलोहे चन्द्रस्तु ना कर्पूरशशाङ्कयो ।
कम्पिल्लाख्यद्रुमे बर्हिमेचकेऽप्यजयोऽब्रवीत् ॥ ३९४ ॥

सुन्दरे तु त्रिषु ज्ञेय स्त्री त्वारण्यकसामनि ।
अन हेत्यृक्समुद्भूत कुमुदे रजतेऽप्यथ ॥ ३९५ ॥

नृशण्ड कनके स्त्री तु चन्द्रार्घ्यायामथ स्त्रियाम् ।
पूष्णो रश्मिसहस्र य शतानि त्रीणि रश्मय ॥ ३९६ ॥

हिमोत्सर्गाय कथितास्तेषु चक्रं तु नप्यद ।
पुंस्यप्येके रथाङ्गे च ससारे सैन्यराष्ट्रयो ॥ ३९७ ॥

जलावर्ते चये वृत्ते मण्डले धनलोहयो ।
काव्यालङ्कारभेदे च विषमे माक्षिकेऽपि च ॥ ३९८ ॥

दद्रुमज्ञव्याधिभेदे व्यूहदम्भप्रभेदयो ।
धर्मचक्रादिके शस्त्रभेदे च द्वे तु पक्षिणि ॥ ३९९ ॥

---

१ पुन' क ग घ पाठ २ पु क घ पाठ ३ थ' ग पाठ ४ रे त्रिप तज्ज्ञ' ग पाठ ५ प' ख पाठ

---

* 'शङ्कर इति स्यात् ।

चक्रवाकाह्वयेऽथ स्त्री चर्चा चर्चिक्यचिन्तयोः ।
मार्जारकर्णिकासंज्ञदेव्यां मार्ष्टौ तु कश्चन ॥ ४०० ॥
स्यात् पुंश्चल्यां च पार्वत्याः पुनर्नामसु सज्जनः ।
चर्चिकेत्याह चर्चस्तु राजराजस्य पुंस्ययम् ॥ ४०१ ॥

नवानां निधिभेदानामेकस्मिन्निति निश्चितः ।
चण्डा स्त्रियां स्याद् दुप्पुत्रसमाख्ये भेषजान्तरे ॥ ४०२ ॥

स्त्र्येव चण्डी तु दुर्गायां त्रिपु त्वत्यन्तकोपने ।
चम्पा स्त्री नगरीभेदे वृक्षभेदे तु पुंस्ययम् ॥ ४०३ ॥

चक्को ना सर्पसत्रस्य सर्पभेदेऽपि[1] यष्टरि ।
व्यथने चिक्कणे तु स्यात् क्लीबं पूगतरोः फले ॥ ४०४ ॥

चरं चराचरे त्रिर्ना चारे स्त्री युवतौ चरी ।
चलं चलाचले त्रिर्ना तुरुष्क इति विश्रुते ॥ ४०५ ॥

निर्यासभेदे वायौ च पुंश्चल्यां तु चला स्त्रियाम् ।
विद्युत्यथ चरिर्वायौ चरतौ ना पशौ द्वयोः ॥ ४०६ ॥

चरणाख्यक्रियायां स्त्री यवसेऽप्यथ चाटुनि ।
चटुः स्त्रीशण्डयोः पुंसि स्वयं पशुपिचण्डके ॥ ४०७ ॥

चपले तु त्रिपु स्त्री तु चञ्चुस्त्रोटौ पतत्रिणः ।
एरण्डे नाथ चर्मी ना भूर्जद्रौ शङ्करस्य च ॥ ४०८ ॥

भृत्ये भृङ्गिरिटाभिख्ये स तु चर्मवति त्रिपु ।
तथा फलकपाणौ च चक्री तु नरि केशवे ॥ ४०९ ॥

द्वे कुलाले गृहस्थे च तौलिके भुजगेऽपि च ।
त्रि तु स्याच्चक्रवन्मात्रे चारस्तु स्यान्नरि स्पशे ॥ ४१० ॥

बन्धे प्रियालवृक्षेऽथ तत्फले क्लीबमङ्गणे ।
चारी तु स्त्री नाट्यनान्यां गयास्य च सेचने ॥ ४११ ॥

---

१. 'तु' ग. पाठः.

आर्यापर्णीविभेदे तु चाटौ ना चटनेऽपि च ।
मिश्रवर्णे कृष्णहरित्सिते तद्वति तु त्रिषु ॥ ४१२ ॥

चान्द्री स्त्री पौर्णमास्यां स्याच्चन्द्रसम्बन्धिनि त्रिषु ।
चार्स्ट्रस्पनौ पुंसि चन्द्रिकायां तु सा स्त्रियाम् ॥ ४१३ ॥

ऊहापोहक्षमायां च बुद्धौ चार्वी त्रिषु त्वयम् ।
सुन्दरे चित्रवासये च चाडुस्तु स्त्रीनपुंसकम् ॥ ४१४ ॥

राजादिस्तुतिवाक्ये ना त्वय पशुपिचण्टके ।
कर्यग्रे केचन प्राहुर्दर्यां त्वेनाह सज्जन ॥ ४१५ ॥

चित्रं नपुंसकं पुण्ड्रे स्यादालेख्येऽप्यथ त्रिषु ।
आश्चर्ये कर्बुराभिख्यवर्णयुक्तेऽप्यथो पुमान् ॥ ४१६ ॥

देवतानुक्रमे प्रोक्त आखुगाजे चिरन्तने ।
कर्बुराख्यगुणेऽथ स्त्री चित्रा हेमन्तरात्रिषु ॥ ४१७ ॥

पशुकामेष्टिभेदे च निश्रुते श्रुतिशालिनाम् ।
कृष्णात्रिवृत्ताभेदे न्यग्रोधीसञ्ज्ञभूरुहे ॥ ४१८ ॥

गोडुम्बाख्यलताजातौ सुभद्राधुनिभेदयो ।
वेदशालिसुगे चापि नक्षत्रे चन्द्रदेवते ॥ ४१९ ॥

तद्युक्ते कालमात्रेऽन्ये तत्कालोत्पन्नयोषिति ।
द्वयोस्तु पाठीनाभिख्यमत्स्यभेदेऽथ चिल्वाट् ॥ ४२० ॥

क्लिन्नेऽक्षिणि च त्रि क्लिन्नाक्षेऽप्यथ द्वे विहगान्तरे ।
*आतापिसञ्ज्ञेऽथो चिल्ली शाकजात्यन्तरे स्त्रियाम् ॥ ४२१ ॥

मारिपाख्ये तथाह्नि च भूसञ्ज्ञेऽथ चिता स्त्रियाम् ।
चित्यायां स्त्री तु चयने चितस्तु त्रिषु कर्मणि ॥ ४२२ ॥

---

१ 'क्रियायां' ङ पाठः । २ 'चा' क ग घ ङ पाठः ।

---

* "स्वामी तु—आतपति— [illegible] नम् [illegible] इति पाठं मन्यन्" इत्यमरटीकायां भानुजीदीक्षितः ।

चितिस्तु स्त्री समूहे स्याच्चितायां चयनेऽपि च।
ज्ञाने च चेततौ त्वेष धातौ स्यान्नरलिङ्गकः॥ ४२३ ॥

चीनो ना पीतमुद्गे स्याद् काककङ्गुद्रुमान्तरे[1]।
मदनाख्ये तथोदीच्यनीवृद्भेदे तु भूम्नि च॥ ४२४ ॥

सद्देशराजेषु पुनर्मृगयोश्चापि पुंस्त्रियोः।
व्यवस्थयाथ मृगयोर्लक्षणं चैवमभ्यधुः॥ ४२५ ॥

ताम्रवर्णो मृगो यः स हरिणः स्याद् स एव यः।
सितक्रोडः स चीनः स्यादित्येकः प्रोक्तलक्षणः॥ ४२६ ॥

अन्यः कपोतवर्णो यस्त्रिंशदङ्गुलमानकः।
इत्यङ्कितोऽथ मदनफले क्लीबमयस्यपि॥ ४२७ ॥

चीरं क्लीच्छिद्रवस्त्रे च वल्कले च स्त्रियां त्वसौ।
झिल्लिकासंज्ञकीटे स्याच्चीरी चुक्रस्तु ना रसे॥ ४२८ ॥

अम्लाख्ये बीजपूरेऽम्लवेतसे च निमन्त्रणे।
गुञ्जिकायां द्वयोस्तु स्यात् सुन्दरेऽथ नपुंसकम्॥ ४२९ ॥

यन्मस्त्वादिशुचौ भाण्डे सक्षौद्रगुडकाञ्जिके।
त्रिरात्रं धान्यराशिस्थं तत्र चिञ्चाफलेऽपि च॥ ४३० ॥

त्रिस्त्वम्लरससंयुक्ते चाङ्गेर्यां तु स्त्रियामियम्।
चुम्रशब्दः पुमान् नाशे विभिण्णे तु त्रिपु स्मृतः॥ ४३१ ॥

च्युतिः स्त्री च्यवने योनौ वायौ च च्योततौ तु ना।
चूषा गजवरत्रायां स्त्री स्त्रीशण्डस्तु चूषणे॥ ४३२ ॥

चूर्णमस्त्री वासयोगे धूलौ क्षारान्तरे त्रि तु।
दग्धेऽथ चूर्णिः स्त्रीलिङ्गा ग्रन्थभेदे कपर्दके॥ ४३३ ॥

ना तु चूर्णयतौ द्वे तु चुचुर्जात्यन्तरे नृणाम्।
किरात्यां शम्बराज्जाते वैदेहादिति केचन॥ ४३४ ॥

---

१. 'ङ्गौ' क. ग. घ. ङ. पाठः. २. 'लि' ङ. पाठः. ३. 'वर्णे तु' ङ. पाठः.

पुल्कसादपरे क्ली तु चेलं वस्त्रेऽधमे त्रिषु ।
चैत्रः पुंसि वसन्तस्य प्रथमे मास्यथ स्त्रियाम् ॥ ४३५ ॥
तत्स्थायां पौर्णमास्यां स्याच्चैत्री भेदा तु चित्रया ।
नक्षत्रेण युते कालभेदे चित्राह्वये पुनः ॥ ४३६ ॥
काले जाते च स यदि स्यादस्त्यर्थस्ततश्च सः ।
पारिशेष्याद् यथायोगं विज्ञेयो नपि पुंसि वा ॥ ४३७ ॥
चैत्यं चिताङ्के बुद्धाण्डे याज्ञिकाज्याधिवासने ।
देवालये च क्लीब स्यादुद्देशद्रौ तु केचन ॥ ४३८ ॥
पुंस्यप्याहुरथो चैद्याश्चेदिनीवृति केचन ।
पुंभूम्नीत्याहुरेप द्वे चेदिराजस्य पुत्रयोः ॥ ४३९ ॥
चोलस्तु पुंसि कूर्पासे करमर्दाख्यपादपे ।
तत्फले क्ली दाक्षिणात्ये नीवृद्भेदे नृभूमनि ॥ ४४० ॥
तद्राजे नास्य सन्ताने द्वयोर्जानपदेषु च ।
गृहच्छदि पु न स्त्री स्याच्चोक्षस्तु त्रिषु सुन्दरे ॥ ४४१ ॥
गीतभेदे तु नाथ स्याच्चूडाकरणकर्मणि ।
चौलं क्ली त्रि तु चोलस्य विकारादावथो नपि ॥ ४४२ ॥
पुंस्यप्येके छत्रमुष्णवारणे स्त्री तु भेषजे ।
मिसिसंज्ञे द्रोणिकाख्यस्तम्बे कुस्तुम्बुरुण्यपि ॥ ४४३ ॥
छत्रा छात्रस्तु शिष्ये ना मधुभेदे नपुंसकम् ।
छागो ना करुणाभिख्यपादपे छगले द्वयोः ॥ ४४४ ॥
छिद्रं रन्ध्रेऽपराधे च दूषणे त्वजयोऽब्रवीत् ।
एतेषु क्लीबलिङ्गं स्यात् त्रिषु तुच्छिद्रवत्यदः ॥ ४४५ ॥
छिन्नं (मणे ! [1]भ्रूमणे) त्रिषु क्ली तु निस्सारे दध्नि सा पुनः ।
छिन्ना गुडूच्यां स्त्री छेकः पुनर्ना मृगपक्षिषु ॥ ४४६ ॥

---

१ 'वि' क ग. घ पाठ

* ... (पु २०९ श्लो. १०२) इति वैजयन्ती ।

गृहासक्तेषु वेदाध्ययुक्ते तु त्रिषु स स्मृतः ।
जयस्तु पीतमुद्गे ना नान्दीवृक्षे पुरन्दरे ॥ ४४७ ॥

पुरन्दरसुते जित्यां होमभेदेषु केषुचित् ।
दुर्गायां तु जया स्त्री स्याद् पार्वत्यां त्वजयोऽब्रवीत् ॥ ४४८ ॥

अन्यत्रापि क्वचिद् देवीविशेषेष्वपि दृश्यते ।
अर्हत्तीर्थकराणां तु याः स्युः शासनदेवताः ॥ ४४९ ॥

तासामन्यतमायां च कथयामास सज्जनः ।
जयस्य हेतुभूतायां विद्यायामपि कुत्रचित् ॥४५० ॥

तृतीयायां तथाष्टम्यां त्रयोदश्यां तिथिष्वपि ।
शमीद्रुमे हरीतक्यामग्निमन्थाख्यपादपे ॥ ४५१ ॥

वचाजीरकतर्कारीष्वथ स्तम्भान्तरे जपा ।
रक्तपुष्पे जपाख्येऽथो उपांशूच्चारणे पुमान् ॥ ४५२ ॥

शब्दस्याश्व जवः पुंसि वेगे त्रिषु तु तद्वति ।
जवा तु स्त्री रक्तपुष्पस्तम्बभेदे जपाह्वये ॥ ४५३ ॥

जन्योऽपवादे नात्रार्थेऽमरदत्तोऽब्रवीन्नपि ।
जनवादे तु पुंस्येनं सिंहः क्लीबेऽजयोऽपठत् ॥ ४५४ ॥

क्ली युद्धे जनितव्ये च त्रि तूत्पादयितव्यके ।
जानितर्यपि जामातुः स्निग्धेषु ज्ञातयस्तु ये ॥ ४५५ ॥

भृत्याश्चापि नवोढायास्तेषु चान्ये तु केचन ।
विर्गतेऽपि द्वयोस्त्वेष मातृवाहक्कीटके ॥ ४५६ ॥

जम्भस्तु दंष्ट्रापार्श्वस्थदन्ते ना भुक्तिपादयोः ।
दैत्यभेदे च जम्भारतरौ क्लीबं तु तत्फले ॥ ४५७ ॥

---

१. 'मन.' क. ग. घ ट. पाठः. २. 'ही' क ग. घ पाठः ३. 'श' ग. पाठः.
४. 'पु' ग ट पाठ. ५ 'व' क. ग पाठ.

विदारणे तु वक्रस्य जम्भा स्त्री स्त्री पुनर्जटा ।
केशसन्दर्भभेदे च मासीसञ्ज्ञौषधान्तरे ॥ ४५८ ॥

तरोः शिफायां च जटीं स्त्रीकारान्तं प्रचक्षते ।
द्रोणाख्यपरिमाणस्य चत्वारिंशत्यथ त्रिषु ॥ ४५९ ॥

जटो जटावति त्रिस्तु जडोऽनालोच्यकारिणि ।
शीतले स्तब्धनिर्बुद्ध्योः पङ्कगन्धिजले तु नपुं ॥ ४६० ॥

पुंसि शीतगुणेऽथाहाजयस्तोये जलं नपि ।
*जले तु त्रिषु जमस्तु द्वयोः स्याद् विप्रभेकयोः ॥ ४६१ ॥

जर्णो ना पादपे चन्द्रे [1]कर्णे पक्षिणि तु द्वयोः ।
त्रिषु वृद्धेऽथ जर्तो ना स्याङ्गे प्रजननाह्वये ॥ ४६२ ॥

योनिरोम्ण्यपरे कश्चिद्धाभीरे च जनः पुनः ।
जनने जननायां च प्रतिवेशविवाहयोः ॥ ४६३ ॥

राजन्यबन्धावमाङ्गे मनुष्ये दिशति सज्जनः ।
क्लीबं दमनके प्राणिभूते चाथ जनी स्त्रियाम् ॥ ४६४ ॥

जतुकृत्संज्ञवल्ल्यां च स्नुषासीमन्तिन्योरपि ।
जनिस्तु पं यामुत्पत्तौ वरयोषिति च स्त्रियाम् ॥ ४६५ ॥

जायतो तु पुमान्स्त्री तु जम्बुर्नम्बूरपादपे ।
तत्फले जम्बु जम्ब्बश्च नस्त्रियोः स्यादथ द्वयोः ॥ ४६६ ॥

चतुष्पाज्जातिभेदेऽथ जम्बुर्ना धर्ममेधयोः ।
क्लीबेऽन्नसान्नेऽमसन्धौ जन्युस्तु द्वे शरीरिणि ॥ ४६७ ॥

अपत्ये च पुमांस्तेन प्रादुर्भावे प्रजापतौ ।
पितर्यपि जगत् तु क्ली जगतीति स्त्रियामपि ॥ ४६८ ॥

---

१ 'तु' ग पाठः

---

* 'अनडुमूकस्तु ... मूक' (पृ. ७२ श्लो. १४) इति वैजयन्ती । † वामे

लोके स्त्री तु जगत्यष्टाचत्वारिंशत्स्वरादिषु ।
छन्दोभेदेषु सुरभौ पृथिव्यां चाथ तत् त्रिषु ॥ ४६९ ॥

त्रसे चराचरे चापि मनुष्ये तु द्वयोरथ ।
जटावति जटी त्रि स्यात् प्लक्षवृक्षे तु पुंस्ययम् ॥ ४७० ॥

जवी वेगवति त्रिः स्याद् द्वे तु वातप्रमीमृगे ।
जालं गवाक्षभेदे क्ली पुष्पक्षारकवृन्दयोः ॥ ४७१ ॥

आनाये कपटे चापि भारताद् दक्षिणे क्वचित् ।
वर्षात् स्यादन्तरद्वीपे मर्त्यजात्यन्तरे पुनः ॥ ४७२ ॥

‡विप्राद्वैदेहजे द्वे स्यात् पटोल्यां तु स्त्रियामियम् ।
जाली जारस्तु नादित्ये तथैवोपपतावथ ॥ ४७३ ॥

अविवाह्यासु कन्यासु या स्यात् कन्याप्रसूतिजा ।
कन्या तस्यां स्त्रियां जारी हिमवद्दुहितर्यपि ॥ ४७४ ॥

क्लीबं तु रक्तकुमुदे जातं त्वस्त्री कदम्बके ।
त्रिरुत्पन्ने जन्मनि क्ली जामिस्तु स्त्री कुलस्त्रियाम् ॥ ४७५ ॥

सुणेऽङ्गुलौ च स्वसरि नीवृद्भेदे च कुत्रचित् ।
जामि तु क्ली जलेऽभ्यासात् समानगुणवस्तुनः ॥ ४७६ ॥

आलस्ये चेतसो जानुस्त्वस्त्री द्वात्रिंशदङ्गुले ।
मानभेदेऽप्यूरुजङ्घासन्धौ चाप्यथ जालिकाः[1] ॥ ४७७ ॥

त्रिषु जालवति द्वे तु दाशे स्यात् स्त्री तु जालिनी ।
पिप्पल्यां चित्रशालायां जिह्मं तु कुटिले त्रिषु ॥ ४७८ ॥

अलसे क्ली तु पापे द्वे सर्पे क्ली तु जितं जये ।
त्रिषु तु स्वीकृते तत् स्याद् युद्धभग्नाभिभूतयोः ॥ ४७९ ॥

---

१. 'कु' ख. ग. पाठः.

---

‡ 'जालं वैदेहकाद् विप्रा' (पु. ७८. श्लो. २२) इति तु वैजयन्ती ।

जिष्णी द्वे शकुनो कश्चित् स्याद् ना क्रोधकारयो ।
इति जिष्णुस्तु ना विष्णाविन्द्रे मध्यमपाण्डवे ॥ ४८० ॥

अर्को च जित्वरे तु त्रिजित्वा त्विन्द्रेऽपि योद्धरि ।
ना स्त्री तु जित्वरी नद्या वाराणस्या च चौणिजा ॥ ४८१ ॥

जीवो ना गीष्पतौ जन्तौ क्षेत्रज्ञे त्रि तु जीवति ।
त्रये प्राणे स्त्री तु मौर्व्या जीवन्त्याख्यलतान्तरे ॥ ४८२ ॥

स्याज्जीवनाक्रियाया तु नृस्त्री छन्दोन्तरे पुन ।
द्विपष्ठिस्वरके क्लीब जीरस्त्वग्न्यन्नयो पुमान् ॥ ४८३ ॥

अजाज्या तु नृशण्ड स्याद् द्वे त्वथ जीर्विवाक् पुन ।
टङ्के ना शकटे द्रव्ये गुल्मे चाथ द्वयो पशौ ॥ ४८४ ॥

मल्लो च चटके चाथ जीवन् स्यात् प्राणति त्रिषु ।
जीवन्ती तु स्त्रिया जीवासञ्ज्ञाकलतान्तरे ॥ ४८५ ॥

ज्योतिष्मतीगुडूच्योश्च जूर्णस्तु स्यान्नृलिङ्गक ।
चक्रेऽपि यावनालेऽपि त्रि तु वृद्धे स्त्रिया पुन ॥ ४८६ ॥

जूर्णा स्याद् वल्कनेऽप्येषा जूर्णिस्तु स्त्री ज्वरे क्षुधि ।
शरीरे च पुमास्त्वेष आदित्ये च विरिञ्चने ॥ ४८७ ॥

समीरणे हुतवहे भेद्यलिङ्ग तु सत्वरे ।
ज्येष्ठस्तु पूर्वजे वृद्धतमे शस्ततमे त्रिषु ॥ ४८८ ॥

त्रपुहीवेरयोस्तु क्ली स्याल्लोहे नीलिकाह्वये ।
अपि द्वयोस्तु हसेऽथ ज्येष्ठा स्त्री शम्भुशक्तिषु ॥ ४८९ ॥

नवस्वेकत्र चालक्ष्मीगृहगोलिकयोरपि ।
इन्द्रदैवतनक्षत्रेऽप्यथ ज्यैष्ठी स्त्रियामियम् ॥ ४९० ॥

ज्येष्ठानक्षत्रसयुक्तपौर्णमास्या पुमास्तु स ।
शुक्रमासे त्रि तु ज्येष्ठसम्बन्धिन्यथ जैवातृ ॥ ४९१ ॥

---

१ 'ना' ख पाठ , वाजिगृ[illegible]
२ '[illegible]स्तु' क ग घ ङ पाठ

क्ली धूते जयनेऽथ त्रिर्जयशीले स्त्रियां पुनः ।
जैन्त्यास्फोताख्यवल्ल्यां स्याद् विष्णुक्रान्तान्यनामनि ॥ ४९२ ॥
ज्योतिरात्मनि सूर्येऽग्नौ हविर्होमार्[1]चिदीप्तिषु ।
ग्रहनक्षत्रतारासु नक्षत्रेऽपि विशेषतः ॥ ४९३ ॥
विलोचने धने पुत्रे साममेदेषु केषुचित् ।
ज्योतिष्टोमाख्ययज्ञे च क्लीबं दीप्तौ तु वा स्त्रियाम् ॥ ४९४ ॥
नित्यं पुमांसमग्नौ चामरदत्तोऽन्वशादिदम् ।
पुन्नपुंसकलिङ्गस्तु ज्योतिष्टोमे मतो मम ॥ ४९५ ॥
ज्यौत्स्नी तु स्त्री पटोल्यां स्याज्ज्योतिष्मद्रजनावपि ।
त्रि तु ज्योत्स्नायाति स्त्री तु झषा नागबलाह्वये ॥ ४९६ ॥
भैषज्ये ना तु विपिने द्वे मत्स्ये मकरेऽपि च ।
झरो ना निर्झरे स्त्री तु झरा स्याज्झरणे त्रि तु ॥ ४९७ ॥
झटो झटितरि द्वे तु शूद्रामैत्रेयजे नरे ।
टङ्कोऽस्त्री परशौ शैलशृङ्गे पाषाणदारणे ॥ ४९८ ॥
मुद्रितोन्मानभेदे च टङ्कणे चाथ नृस्त्रियोः ।
मृगभेदे व्य्यवस्थाने[3] ना तु कश्मीरविश्रुते ॥ ४९९ ॥
महीरुहान्तरेऽथ स्यात् फले तस्य नपुंसकम् ।
तलश्चपेटे तालाख्यद्रुमे शीतगुणे च ना ॥ ५०० ॥
त्रि तु तद्वति शण्डे तु तालसंज्ञतरो[4] फले ।
पाताले समदेशे च चतुर्भागे पलस्य च ॥ ५०१ ॥
पाणिना दक्षिणेनैव वीणातन्त्र्याश्च ताडने ।
अजयस्तु पठत्येमेत् कार्यबीजे धनेऽपि च ॥ ५०२ ॥

---

१. 'दा' ख. घ. ङ. पाठः. २. 'प्य' ख. पाठः. ३. 'तो' ग. पाठः. ४ 'नं स्त्र' ङ. पाठः.

---

¶ 'अग्नेर्भ्राजन्ते अर्चयः' इति श्रुतेरिदन्तोऽपि ।

अथ स्वरूपयोस्त्वस्त्री हस्तन्ने तु तला तलम् ।
इति स्त्रियां च शण्डे चाप्यथ लिङ्गत्रये तटम् ॥ १०३ ॥
प्राहुर्जलाशयप्रान्ते तीरे त्वन्येऽद्रिसानुनि ।
तङ्कः सम्भावनायां च भयेऽप्यस्त्री ततं पुनः ॥ १०४ ॥
वीणादिवाद्ये क्लीं ना तु पितरि त्रि तु विस्तृते ।
व्याप्ते त्रयं तु त्रितये त्रिस्त्रिवेद्या त्रयी स्त्रियाम् ॥ १०५ ॥
नपुंसी त्रयाणां वृन्दे स्यात् त्रस तु त्रिषु जङ्गमे ।
त्रसी तु स्त्री त्रासभेदे यस्मिन् सति दिशां भ्रमः ॥ १०६ ॥
गन्तु विवेकशून्यत्वादित्येव कश्चिदब्रवीत् ।
त्र्यश्रा स्त्रियां त्रिवृत्सञ्ज्ञवल्ल्यां त्र्यश्रौ तु सा त्रिषु ॥ १०७ ॥
त्वचं तु क्ली सूक्ष्मदाल्यगन्धद्रव्येऽथ वल्कले ।
त्वचा स्यान्नृस्त्रियोर्ना तु तटिम्तटतिधातुके ॥ १०८ ॥
सूनायां तु स्त्रियां ना तु तरिर्वैश्वानरोऽनले ।
स्त्री चर्मकृतपेडायां नावि चाथ तनुः स्त्रियाम् ॥ १०९ ॥
अलम्धरायां क्ष्माख्यराशौ वपुषि सा पुनः ।
तन्वीति पिप्पलीसञ्ज्ञभेषजे ना तु पादपे ॥ ११० ॥
नान्दीवृक्षाह्वये त्रिस्तु विरलेऽल्पे कृशेऽपि च ।
तन्तुस्तु सूत्रे ना यज्ञसंस्थायां चाथ स द्वयोः ॥ १११ ॥
एकत्र भेदे भेदानां मण्डल्याह्वयभोगिनाम् ।
ग्राहाख्ययादोभेदे च सामभेदे पुनर्नपि ॥ ११२ ॥
स(वेत्निर्घोमि)चिंत्तायां पुच्छे पश्चान्तरस्थे वस्तुनः ।
छुरिकायां च खङ्गादिमुष्टौ चाप्यस्त्रियामथ ॥ ११३ ॥
तप्ता स्याद् भास्करे पुंसि मेघटिङ्क तु तापके ।
त्वष्टा प्रजापतौ वह्नौ देवतक्षणि तक्षणि ॥ ११४ ॥

---

१ टी' ङ पाठ २ 'रेउन' क ख ग पाठ ३ 'दद्वे च सा' ग पा[illegible]
४ 'स्त्रियां' ङ पाठ ५ 'स्तु' क ख पाठ

विष्ण्वग्रजे माध्यमिकदेवे दिनकरे च ना।
त्रि तु त्वक्षितरि स्यात् तु तक्षा ना वर्धकौ स तु ॥ ९१५ ॥
विश्रीकरणजे मत्स्यजातिभेदे द्वयोस्तथा।
आयोगवे च वृश्चिश्चेत् तक्षण तस्य ना पुन ॥ ९१६ ॥
तक्षा दीपे ज्वरे सूर्य आतपे क्ली तु पुत्रयो ।
तपस्तु नपि कृच्छ्रादौ धर्मसन्तापयोरपि ॥ ९१७ ॥
लग्नान्नवमराशौ च प्राहु सावत्सरा इदम्।
शिशिरर्तौ त्वचि प्राह शाश्वत' पुत्रपो पुन ॥ ९१८ ॥
माघमासे तमस्तु क्ली पापे नरकशोकयो ।
गुणत्रयस्यान्यतमे साङ्ख्याना प्रकृतौ चले ॥ ९१९ ॥
अज्ञाने ज्वलति ध्वान्ते रात्रौ राहौ तु ना तमा ।
तालः कालक्रियामाने तृणराजाख्यपादपे ॥ ९२० ॥
अङ्गुष्ठमध्यमामाने चपेटे त्रपुसेऽपि च।
इषुभेदे च नाथ स्त्री ताली हढदलाह्वये ॥ ९२१ ॥
तृणद्रुमे तामलकीसौराष्ट्रीमुसलीषु च।
प्रतिताल्यामथ क्लीब हरिताले फलेषु च ॥ ९२२ ॥
अत्रोक्तस्थावराणा स्यात् कास्यताल्या तु तत् त्रये।
तारस्तु शुद्धमुक्ताया मुक्ताशुद्धौ च तारणे ॥ ९२३ ॥
रदेऽपि सज्जन प्राह तारा तु स्यात्तराशियो ।
नक्षत्रे नेत्रमध्ये च रजते तु नृशण्डयो ॥ ९२४ ॥
त्रिषु तूच्चैस्तरे शब्दे विशदेऽप्यथ पङ्कजे।
प्रणवे च नपि स्त्री तु तारा योषिति वालिन ॥ ९२५ ॥
सुगतस्य च ताम्रं तु स्यात् क्लीब शुल्वरूप्यो ।
ना शुल्ववर्णसदृशो वर्णे तद्वति तु त्रिषु ॥ ९२६ ॥

---

१ 'धा' क ख घ ङ पाठ २ 'मत' ङ पाठ ३. 'शु' क घ पाठ. 'तु कार' ग पाठ ५ 'कृ' ख ङ पाठ

ताम्रा तु स्त्री कृष्णलाख्यवल्ल्या तार्क्ष्यस्तु ना रथे ।
गरुडे शैलजे विष्णौ विष्णोर्वामनविग्रहे ॥ १२७ ॥

सौवर्चलाख्यलवणे पुन स्त्री द्वे तुरङ्गमे ।
तान्तस्तु मासे ना तान्तिर्मति तु त्रि पुमान् पुन ॥ १२८ ॥

विस्तारे तानशब्दोऽथ गीतिधर्मे नपुंसकम् ।
तापस्तसौ पुमान् स्त्री तु तापी स्यान्निम्नगान्तरे ॥ १२९ ॥

ताडो ना ताडने ताडी स्त्री तालीसदृशपादपे ।
तार्णं भारतवर्षस्थद्वीपभेदे नपुंसकम् ॥ १३० ॥

तृणसम्बन्धिनि त्रि स्यात् त्राको धर्मे नृलिङ्गक ।
त्रि स्याच्छरणदेशीये त्वाष्टस्तु क्षपके पुमान् ॥ १३१ ॥

अरत्निा च यूपस्य स्यादरत्नौ चतुर्दशे ।
त्वाष्ट्री तु स्त्री सूर्यपत्नीभेदे त्वष्टु पुनस्त्रिषु ॥ १३२ ॥

सम्बन्धिमात्रे यस्यापि त्वष्टा स्याद् देवतात्र च ।
अपत्ये तु द्वयोस्त्वष्टुरथ तापिर्नृलिङ्गक ॥ १३३ ॥

दैत्यभेदे तापयतो नदीभेदे तु केचन ।
स्त्रीति पातरि तु त्राता त्रिर्ना तु सितसर्षपे ॥ १३४ ॥

तिक्तस्तु पर्पटे पुंसि पटोले गुग्गुलावपि ।
विरसाख्यरसे षण्णा रसाना कटुकेऽपि च ॥ १३५ ॥

गन्धे च सुरभावेतद् गुणत्रययुते त्रिषु ।
स्त्री तिक्ता कटुरोहिण्या तिष्यस्तु नरि मारुते ॥ १३६ ॥

महादेवे कलियुगे वह्नौ पुष्याख्यतारके ।
तद्युक्ते कालसामान्ये तज्जाते तु त्र्यथ स्त्रियाम् ॥ १३७ ॥

तिष्यामलक्या तिग्मस्तु वज्रे चौष्ण्यगुणेऽपि च ।
त्रि तु तद्वति तीक्ष्णे च तेजिते च तिन्त तु नप् ॥ १३८ ॥

---

१ 'वाचक' ग पाठ धचक' ख पाठ

पृष्ठवंशाधरे त्रिस्तु त्रयाणां निवहेऽथ ना।
शालङ्कायनसंज्ञेषु मुनिभेदेषु भूम्नि च ॥ १३९ ॥

तिर्यक् तु साचिभेदे त्रिर्नरं त्वाह पशुष्वमुम्।
त्रिवृत् स्त्री त्रिवृतासंज्ञलताभेदेऽथ पुंसि सः ॥ १४० ॥

नवसङ्ख्यात्मके स्तोमे त्रि तु स्तोत्रे च तद्वति।
तद्युक्तेऽप्यर्हरादौ स्याद् रज्ज्वादौ त्रिगुणे तथा ॥ १४१ ॥

तीर्थमस्त्री पुण्यजले पुण्यक्षेत्रेऽध्वरे भगे।
जलावगाहमार्गे च मन्त्राद्यष्टादशस्वपि ॥ १४२ ॥

शास्त्रे निदाने योग्ये च स्त्रीपुष्पे दर्शनेष्वपि।
उपाध्यायेऽप्युपाये च प्राहाचार्यकुलेऽपरः ॥ १४३ ॥

नदीष्वन्योऽथ तीक्ष्णोऽस्त्री विषे क्लीबं तु संयुगे।
गरे चाप्यजयोऽयादौ लोहे कालायसाह्वये ॥ १४४ ॥

अयोभेदे परे पुंसि त्वौष्ण्ये तीक्ष्णार्जकाह्वये।
स्तम्बे च चारभेदे चातिहिंसाकारधारिणि ॥ १४५ ॥

सूर्येऽर्थे स्त्री वचायां स्यात् तीक्ष्णा त्रिर्निशितोष्णयोः।
आत्मत्यागि च तीव्रं तु त्रि(तृ?पृ)त्कृष्टनितान्तयोः ॥ १४६ ॥

उष्णे च क्ली त्वसस्त्वेऽथ तीरं कूले नपुंसकम्।
तीरी तु शरभेदे स्त्री योऽस्त्रो वेगसमन्वितः ॥ १४७ ॥

तुङ्गस्तु पुंसि पुन्नागद्रुमे प्रांशौ तु स त्रिषु।
स्त्रियां तु तुङ्गा स्याद् वंशरोचनासञ्ज्ञभेषजे ॥ १४८ ॥

अजगन्धाह्वयस्तम्बे पुनस्तुङ्गी पुमान् पुनः।
तुग्रो यवे वरिष्ठे तु त्रिरल्पाकाशयोस्तु नपुं ॥ १४९ ॥

तुत्थं रसाञ्जने क्लीब नीलीसञ्ज्ञौषधौ तु सा।
सूक्ष्मैलायां च तुत्था स्त्री रथचक्रस्य तु स्त्रियाम् ॥ १५० ॥

---

१. 'व्यवहारादौ र' ग. पाठ:. २. 'क्ला' ग. पाठ ३. 'च' क. घ. पाठ. ४. न्यपि च' क. घ ङ. पाठ:. ५. 'क' क. ख. घ. पाठ..

तुम्बा नामावलाब्वां तु तुम्बी तुम्बं तु तत्फले ।
क्लीबं तुच्छं तु शून्ये त्रिष्वसुखे तु नपुंसकम् ॥ ९५१ ॥

तुञ्जस्तु दाने वज्रे च बलादानादिके च ना ।
तुञ्जा तु रक्षणे स्त्री स्याद्धिंसायां तु नरस्त्रियोः ॥ ९५२ ॥

तुन्नस्तु व्यथिते त्रि स्यान्नान्दीवृक्षे तु पुंस्ययम् ।
तुण्डस्तु नान्दीवृक्षे ना तुष्टा क्ली तद्वति त्रिषु ॥ ९५३ ॥

तुषस्तु पुंसि धान्यानां त्वचि तत्सदृशे तथा ।
हिरण्यादेश्च शकले विभीतकतरावपि ॥ ९५४ ॥

तत्फले क्ली तुटिस्तु स्त्री पुंस्यप्येके प्रचक्षते ।
वाद्यभेदे लवे चाल्पकालभेदे च संशये ॥ ९५५ ॥

सूक्ष्मैलायां च ना स्वेष तुटतौ स्त्री पुनस्तुरिः ।
तन्तुवायोपकरणभेदे पुंसि तु वारिधौ ॥ ९५६ ॥

तुलाविधातौ च क्ली तु तूयं तोये द्रुते त्रिषु ।
तूर्योऽस्त्री वाद्यनिर्घोषे स तु वाद्ये नपुंसकम् ॥ ९५७ ॥

तूरो ना वाद्यनिर्घोषे गतित्वरणहिंसयोः ।
पुनः स्त्रीपुंसयोस्तूरा तूर्यं तु स्यान्नपुंसकम् ॥ ९५८ ॥

वासोदशायां तूपा तु तुष्टी स्त्रीपुंसयोरथ ।
तूर्णं त्रिषु स्यात् त्वरिते हिंसिते क्ली तु हिंसने ॥ ९५९ ॥

तृप्तं तु नपि षड्पष्टिस्वरे छन्दोन्तरे तथा ।
तृप्तो त्रि तु स्यात् प्रीते च सुहिते चाथ तृप्रवाक् ॥ ९६० ॥

क्ली पापदुःखयोर्ना तु पुरोडाशे तृप्रं पुनः ।
क्लीबं स्यान्मक्षिकाभेदे गुग्गुलसंज्ञकेऽथ तत् ॥ ९६१ ॥

दूर्वायवेक्षुप्रभृतिक्षुद्रस्थावरजातिषु ।
तृणाण्डयोरथ पुमांस्तैरः कतकपादपे ॥ ९६२ ॥

क्ली तु तस्य फले वक्रेऽप्यथ तैलो नृगण्डयो ।
तिलस्नेहे तिलस्य त्रि सम्बन्धिन्यथ तोक्म†वाक् ॥ ९६३ ॥

हरियवे ना हरितवर्णे चाथ त्रि तद्वति ।
क्ली स्वमे कर्णमूलेऽथ तोड सशिखमुण्डने ॥ ९६४ ॥

क्लीबेऽपनयने पुंसि दण्डोऽस्त्री निग्रहे मथि ।
आज्ञाया शासने राज्ञा हिंसाया लगुडे नृपे ॥ ९६५ ॥

सेनाया वृक्षशाखायामथ दक्षः प्रजापतौ ।
प्राचेतसे बले पुंसि त्रिषु चारुणि पेशले ॥ ९६६ ॥

कुक्कुटे तु द्वयो स्त्री तु भुवि दक्षा दशा पुन ।
परमायामवस्थायामवस्थामात्रकेऽपरे ॥ ९६७ ॥

आयुषो दशमांशेऽन्ये विपाके कर्मणे परे ।
दीपवर्तौ च वर्तौ च वस्त्रस्यान्ये तु मन्वते ॥ ९६८ ॥

अस्मिन्नर्थे स्त्रिया भूम्नि पुंभूम्न्यन्येऽथ दंशवाक् ।
दशनाख्यक्रियाया ना मक्षिकाया तु स द्वयो ॥ ९६९ ॥

वन्याया स्त्री तु तज्जातिभेदे दयल्पकेऽथ ना ।
दन्तः स्याद् दशने शैलकटकेऽन्यस्त्ववोचत ॥ ९७० ॥

दंष्ट्राया हस्तिनश्चेति दन्ती तु स्थावरान्तरे ।
नागदन्तीसमाख्ये स्त्री दत्तं तु नपि हेमनि ॥ ९७१ ॥

त्रिषु विश्राणिते दभ्रः पुनश्च-द्रसमुद्रयो ।
ना त्रि स्वल्पे च कुशले दर्भं तु नपि वल्कले ॥ ९७२ ॥

गोत्रकृत्यृषिभेदे ना दर्वशब्दस्तु राक्षसे ।
द्वयोर्देशविशेषे तु पुंभूम्न्यप्यथ दस्मवाक् ॥ ९७३ ॥

---

१ 'णोऽन्' क. ख घ ङ पाठ

---

† 'तोकम वर्णमले पुंसि हरिते च हरियवे' इति तु मेदिनी । 'कर्णमूलेऽप्यहरितोऽन्नम मो हरियव' (पु २३३ श्लो ३८) इति वैजयन्ती ।

पुंसि वह्नौ च वज्रे च त्रि तूपक्षयकारिणि ।
द्रवो नर्मणि निर्यासे द्रवणे च पलायने ॥ १७४ ॥

पुंसि स्त्री तु द्रवा नद्यां त्रिर्धनप्रतियोगिनि ।
दर शङ्खे भये श्वभ्रे छिद्रमात्रे तु सज्जन ॥ १७५ ॥

नृशण्ड कन्दरे तु स्त्री दरी स्वल्पार्थके पुन ।
दरोऽव्ययमिति प्राहुर्दलं तु क्ली तरुच्छदे ॥ १७६ ॥

न स्त्री भागेऽथ ना द्वन्द्व समासे चार्थचोदिते ।
नृशण्डस्तु युधि क्ली तु रहस्ये मिथुनेऽपि च ॥ १७७ ॥

युग्मे च भेद्यलिङ्ग तु युग्मावयववस्तुषु ।
दधिस्तु पुंसि श्रीपिष्टसञ्ज्ञनिर्यासवस्तुनि ॥ १७८ ॥

क्ली तु क्षीरविकारे स्याद् विप्रप्रियमिति श्रुते ।
दर्विः समुद्रे चक्रे च ना स्त्री तु प्रतिकोलिके ॥ १७९ ॥

दस्युस्तु द्वे चतुर्ष्वष्टौ मर्त्यजात्यन्तरेषु ये ।
चौर्यादिदोषदुष्टत्वाद् भवेयु सह्यहिष्कृता ॥ १८० ॥

तेषु ना तु रिपौ त्रिस्तु तस्करेऽथ द्रवत् त्रिषु ।
पलायके द्रावके च द्रवन्ती तु स्त्रियामियम् ॥ १८१ ॥

न्यग्रोधसञ्ज्ञकस्तम्बे दरत् तु स्त्री भये हृदि ।
नद्यां प्रपाते चैत्येके विद्वायामिति कश्चन ॥ १८२ ॥

हिमवत्तट इत्यन्ये राजभेदे तु पुंस्ययम् ।
तस्यैव पुंमपत्येषु भूम्नि देशस्य भूपते ॥ १८३ ॥

दण्डी पुंसि यमे द्वा स्थेऽप्यथ दण्डवति त्रिषु ।
द्वे शुके द्वे तु दंष्ट्री स्यात् सर्पे ग्राहाख्ययादसि ॥ १८४ ॥

वराहे मूषिके व्याघ्रेऽप्यथ दंष्ट्रावति त्रिषु ।
दासो भृत्ये द्वयो स्त्री तु षडश्वासञ्ज्ञवीरुधि ॥ १८५ ॥

---

१ 'दं' ख पाठ २ 'पुं' ग पाठ

स्याद् दासी नीलझिण्ट्यामप्यथ दाशो द्वयोरयम् ।
भृत्यकैवर्तयोस्तत्र स्त्र्यर्थे दाश्यथ नृस्त्रियोः ॥ १८६ ॥

दाने (द्वे ? च) स्त्री तु दाशात्र दशायोगिनि तु त्रिषु ।
दान्त(स्तु ? स्त्रि) दमिते दान्तियुक्ते दान्तविकारके ॥ १८७ ॥

स्त्र्यर्थे तु पूर्वयोर्दान्ता वाच्ययोरुत्तमे पुनः ।
स्त्र्यर्थे दान्ती दमनके पुनर्दान्तौ च तन्नपि ॥ १८८ ॥

दाक्षस्त्रिर्दक्षसम्बन्धिन्यपत्यायां तु स्त्रियामियम् ।
कपिलायां भवेद् दाक्षी दायस्तु त्रिषु दातरि ॥ १८९ ॥

ना तु दाने विभक्तव्यपित्रादिद्रविणे तथा ।
अजयस्त्वाह सोल्लुण्ठभाषिते रक्षणादिषु ॥ १९० ॥

यौतकादिधने चाथ दास्व आयुक्तके त्रिषु ।
ना यज्ञेऽन्यस्तु दाने क्लीत्याह दाकस्तु दातरि ॥ १९१ ॥

त्रिर्द्वे तु यजमाने स्याद् दाजुस्तु त्रिषु दातरि ।
द्वयोस्तु यजमाने ना त्वर्के वातेऽप्यथो नपि ॥ १९२ ॥

पुंस्यप्यन्ये दारु काष्ठे क्ली पुनर्देवदारुणि ।
दार्वी दारुहरिद्रायां स्त्री द्विजस्तु द्वयोर्भवेत् ॥ १९३ ॥

ब्रह्मक्षत्रियविट्स्वण्डजातेषु दशनेषु ना ।
द्विजा तु स्त्री हरेण्वाख्यगन्धद्रव्ये द्विकं पुनः ॥ १९४ ॥

मनआत्मद्वये क्लीबं काके तु द्वे स तु त्रिषु ।
सद्वे द्विपरिमाणे स्याद् द्वाभ्यां क्रीतादिकेष्वपि ॥ १९५ ॥

दिग्धस्तु विषलिप्तेषौ त्रिषु लिप्तप्रवृद्धयोः ।
क्ली स्यादुपचये स्नेहेऽप्याहेदं वैजयन्तिका ॥ १९६ ॥

दिव्यं क्ली ज्योतिषि लशुने गाने तन्त्रीसमुद्भवे ।
प्रत्यये च त्रि तु दिवि भवे दिष्टस्त्वनेहसि ॥ १९७ ॥

---

१. 'ल्या' ग. पाठः, 'प्ता' ङ. पाठः.

ना क्ली संवदने दैवे कृतान्तेऽपि धनञ्जय. ।
दैवाद् भेदेन पठति दानभूषणयोरपि ॥ ९९८ ॥

यन्मृत्तिकाम्भसा स्नान तत्रापि त्रि तु भाषिते ।
दत्ते च दि(ष्ट'ष्टि)स्तु पुमान् प्रमाणेऽष्टाङ्गुलेऽथ स· ॥ ९९९ ॥

स्त्री दानोक्तिसुखेषु स्यादथामित्रे द्विपत् पुमान् ।
त्रिस्तु द्वेष्टरि मर्त्ये तु द्विपाद् द्वे व्यङ्घ्रिके त्रिषु ॥ ६०० ॥

दीनस्तु पुंसि पुन्नागे केतक्या च त्रिषु त्वयम् ।
दरिद्रे कृपणे क्षीणे दीर्णा तु ककुभि स्त्रियाम् ॥ ६०१ ॥

त्रिषु भिन्ने च भीते च दीर्ण दीप्ता तु विद्युति ।
स्त्रिया प्रज्वलिते तु त्रि दीप्यम्तु नरि जीरके ॥ ६०२ ॥

खराश्वासजभैषज्ये त्रि तु दीपयितव्यके ।
द्वीपोऽस्त्रियामन्तरीपसन्नेऽन्तर्वारिणस्तटे ॥ ६०३ ॥

जलाशयविशेषे तु द्वीपी स्त्रीति प्रचक्षते ।
दीर्घं त्रिष्वायते मात्राद्वयकालस्वरे तथा ॥ ६०४ ॥

क्ली तु स्यादुभयो साम्नो सर्मुन्वेनर्गगीतयो ।
द्वीपिर्द्वे श्वापदे काले पुमान् दुग्धं तु नम्यद ॥ ६०५ ॥

क्षीरे गवादिके तु त्रि. कृतदोहे तथैव तत् ।
पय प्रभृतिक चाथ दुर्ग क्ली नरके वने ॥ ६०६ ॥

राष्ट्रे तु ना परे त्वाहुर्दुष्प्रापनगरे नरम् ।
अन्ये क्ली दुर्गमे तु त्रि कात्यायन्या तु सा स्त्रियाम् ॥ ६०७ ॥

दुर्गा द्रुणी तु कच्छप्या स्त्री मौर्व्या तु द्रुणाथ नप् ।
द्रुण धनुषि दुःखं तु क्ली व्यथायामथ त्रिषु ॥ ६०८ ॥

तत्साधने द्युतिस्तु स्त्री प्रभाभिगमकान्तिषु ।
पुंमांस्तु द्योततौ ना तु द्यवार्कस्वर्गराजसु ॥ ६०९ ॥

१. 'भा' ख ङ. पाठ. २ 'पु' च घ पाठ. ३ 'तु' क. ग. घ. ङ पाठ.. ४. 'घ' ख. पाठ. ५ 'दी' क घ. पाठ.

अभिगन्तरि तु त्रि. स्यादित्येके दूतवाक् पुन ।
द्वे सन्देशहरे शुके तु ना दूती तु सा स्त्रियाम् ॥ ६१० ॥

सञ्चारिकायामित्येके दूष्यं तु स्थूलपूययो ।
क्ली (तु[२] त्रि) दूषयितव्येऽथ दृढं वल्ययउशीरयो ॥ ६११ ॥

दृढा स्त्रियामामलक्या तमालक्या तथौषधो ।
तालमूलीसमाख्याया त्रि तु स्थूलेऽधिके भृशे ॥ ६१२ ॥

बलवत्यप्यथ श्लेष्मसङ्गे चर्मविकारके ।
नृशण्डयोरथो दृश्या स्त्री सेनायामथ त्रिषु ॥ ६१३ ॥

दर्शनीये भूषणे क्ली दृष्टं तु त्रिषु वीक्षिते ।
ज्ञाते क्लीब तु भूपाना भये स्वपरचक्रजे ॥ ६१४ ॥

ऐहिकार्थेऽप्यथो देवः पुमान् खड्गे महीपतौ ।
नाट्योक्तिविषयक्ष्मापे चक्षुरादीन्द्रियेषु च ॥ ६१५ ॥

स्त्री तु राजकुलोद्भूतगजपत्न्या तथा पुन ।
महिष्या नाट्यभाषास्थनृपतेर्मद्यमूर्वयो ॥ ६१६ ॥

गुडूचीस्पृक्कयोर्देवी सुरे तु द्वे पुमान् पुन ।
देष्णो बाहौ द्वयोस्तु स्याद् यजमानेऽथ स त्रिषु ॥ ६१७ ॥

सुरूपे दानशीले च देवा तु नरि देवरे ।
अग्नौ च केचन त्वाहु स्त्री पितृव्यस्त्रियामिति ॥ ६१८ ॥

देशी तु ना गुरौ त्रिस्तु केचिन्मार्गोपदेशके ।
स्त्री तु प्रदेशिनीनाम्न्यामङ्गुल्या देशिनी भवेत् ॥ ६१९ ॥

द्वेषी तु निम्बवृक्षे ना द्वेषशीले तु भेदवत् ।
शत्रौ च दैत्यं तु क्लीबसुरीर ना विर्भीतके ॥ ६२० ॥

द्वे दैतेये स्त्री तु दैत्या सुरासजकभेषजे ।
दैष्टं क्ली याज्ञिकाना स्याद् प्रोक्षण्यासादने त्रि तु ॥ ६२१ ॥

१ 'त' ख . २ 'दू' क घ पाठ

सम्बन्धिनि स्याद् दिष्टस्य दिष्टेश्चाथ विधौ नपि ।
दैवं त्रिर्दैवसम्बन्धे द्रोणा स्त्री चतुराढके ॥ ६२२ ॥

दारुपात्रविशेषेऽथ काकजात्यन्तरे द्वयो ।
अश्वत्थाम्नस्तु ताते ना शाकस्तम्बान्तरे तथा ॥ ६२३ ॥

स्त्री तु द्रोणी द्रोणपुष्पीसञ्ज्ञस्तम्बे गिरिप्लवे ।
शैलस्य शिल्यो सन्धौ द्रवभाण्डे तथापरे ॥ ६२४ ॥

आहु काष्ठाम्बुवाहिन्या द्रोहस्तु द्रोहणे पुमान् ।
द्वे तु विप्रखगीजाते मत्स्यजात्यन्तरे विदु ॥ ६२५ ॥

दोषो वातादिके दुष्टौ गुणस्य प्रतियोगिनि ।
ना दोषा तु भुजाया स्त्री स्यात् त्वाकारान्तमव्ययम् ॥ ६२६ ॥

रात्रावथ रजन्यामित्यस्मिन्नर्थे परे विदु ।
द्योतस्तु द्योतनाया ना दीप्तौ द्योता तु सा स्त्रियाम् ॥ ६२७ ॥

ज्ञेया पिङ्गलकेशादिकन्याया सुरभावपि ।
धर्मोऽस्त्री सुकृते साम्ये स्वभावे लग्नराशित ॥ ६२८ ॥

राशौ तु नवमे प्राहुर्मौहूर्ता नौ तु सोमपे ।
न्यायाचारयमाहिंसालङ्क्चापेषु राज्ञि च ॥ ६२९ ॥

मधानक्षेपे सन्ये च श्रुतौ दण्डविनिर्णये ।
सता तु सङ्गतेऽप्येनमजय समुपादिशत् ॥ ६३० ॥

ध्वजं त्वस्त्री पताकाया चिह्ने पूर्वदिशो गृहे ।
शिश्नेऽथ तालवृक्षे ना वृक्षमात्रे तु सज्जन ॥ ६३१ ॥

धन्यः पुण्यवति त्रि स्याद् धनस्य च निमित्तके ।
धन्या लताप्रहत्या स्त्री कुस्तुम्बुरुणि चाप्यथ ॥ ६३२ ॥

---

१ 'ना' क ख घ. ट पाठ

धवो ना धवने पत्यौ योषितामजयः पुनः ।
प्रभुमात्रेऽब्रवीदेनं तदसन्मूलहानितः ॥ ६२३ ॥

धुरन्धराख्यद्रौ स्त्री तु तत्फले द्वे तु मानवे ।
धरो ना भूधरे तूले कार्पास्यां स्त्री पुनर्धरा ॥ ६२४ ॥

मूसीगुडूच्योर्धत्रस्तु ना वृक्षेऽर्केऽप्यथो नपि ।
गृहे नभसि सूत्रे च धत्रा तु दिवि सा स्त्रियाम् ॥ ६२५ ॥

धनुशब्द उकारान्तः प्रियालाख्यद्रुमे पुमान् ।
स्त्री तु तस्य फले पापेऽप्यथ धर्ता त्रि धारके ॥ ६२६ ॥

ना तु धर्मे धन्व तु स्त्री चापे व्योम्न्यथ शाश्वतः ।
स्थलेऽप्याह मरौ पुंसि ध्वजी तु ध्वजसंयुते ॥ ६२७ ॥

त्रिः शौण्डिके च ध्वजिनी सेनायां स्त्री धनी तु ना ।
कुबेरे त्रिस्तु धनवन्मात्रे वार्धुषिके तथा ॥ ६२८ ॥

धन्वी तु ना धनूराशौ धानुष्के तु भवेत् त्रिषु ।
धनुर्नृशण्डश्चापे स्त्री चतुर्हस्तप्रमाणके ॥ ६२९ ॥

धाना स्त्री भूरुहां बीजे कुस्तुम्बुरुणि चाप्यसौ ।
भ्रष्टे यवे भूम्नि च हर्षनन्दी त्ववोचत ॥ ६४० ॥

धाना यवानां भ्रष्टानां स्थूलचूर्ण इतीदृशम् ।
स्त्री दाने धौरणे पाने धान्यं तु स्त्रीनपुंसकम् ॥ ६४१ ॥

कुस्तुम्बुरुणि सस्ये स्त्री ध्वाङ्क्षस्तु बककाकयोः ।
द्वयोस्तत्रापि च स्त्र्यर्थे ध्वाङ्क्षी ध्वाङ्क्षा तु नृस्त्रियोः ॥ ६४२ ॥

स्याद् घोरवाशिते धात्रः पुनर्द्वे कितवेऽथ सा ।
धात्री स्त्र्यामलकीभूम्योरुपमातरि चाथ ना ॥ ६४३ ॥

ध्वाङ्क्षिर्ध्वाङ्क्षतिधातौ स्याद् स्त्री तु स्याद् घोरवाशिते ।
धाता तु ना विरिञ्चे त्रिः पित्रे धातरि धर्तरि ॥ ६४४ ॥

---

१. 'के' ग. पाठः. २. 'मा' क. पाठः. ३. 'ना' ग. पाठः.

धिष्ण्यस्तु याज्ञिकानां ना वह्निभेदेषु केषुचित् ।
तेषां स्थानेषु चान्ये तु वह्निमात्रे प्रचक्षते ॥ ६४५ ॥

शुक्राङ्गारकयोः स्त्री तु नक्षत्रे स्थानगेहयोः ।
अजयस्तु बलेऽप्येतत् स्वनिघण्टावचीकॢतत् ॥ ६४६ ॥

आसनेऽथ स्त्रिया धिष्ण्या स्यादुल्कायामथो पुमान् ।
धीरोऽब्धौ मन्थरे तु त्रिर्धृतिमद्विदुषोरपि ॥ ६४७ ॥

स्त्री तु धीरा गुडूच्यां स्याद् धीवा व्याधौ पुमान् द्वयोः ।
मत्स्ये कश्चित् तु देवे द्वे त्रि तु कर्मकरे स्त्रियाम् ॥ ६४८ ॥

धीवरीत्याह ना तु स्याद् ध्रुवः शम्भुगिरिश्वयो ।
औत्तानपादौ कीलेऽथ त्रिर्नित्ये निश्चले स्फुटे ॥ ६४९ ॥

ध्रुवा तु स्त्री सालपर्ण्यां गीतिस्रुग्भेदयोर्भुवि ।
धूर्तः पुंसि महादेवे नीपे पुरचकेऽपि च ॥ ६५० ॥

धुर्धूरे च प्रसूने तु क्षीरमेषा महीरुहाम् ।
अयोमयेऽपि पत्राङ्के भेषलिङ्गे तु वञ्चके ॥ ६५१ ॥

धूका व्याधौ नरीत्येके कामिलायां तु केचन ।
धूका स्त्रीत्यभ्यधुर्धृष्टिर्धर्षणे स्त्री पुमांस्त्वयम् ॥ ६५२ ॥

रश्मौ धृ(पु?ष्णु)*र्ना सन्तापे [illegible] चौरे[2] तु स त्रिषु ।
प्रगल्भे वैजयन्त्यां तु धृष्टे चेत्याह ना पुनः ॥ ६५३ ॥

धृत्वा विष्णौ गिरावब्धौ यतिनि स्त्री तु धृत्वरी ।
भूमौ धेनुस्तु हस्तिन्यां नवसूतगवीगिरोः ॥ ६५४ ॥

स्त्री ध्री तु सामभेदे स्याद् ध्वान्तस्तु नरि मारुते ।
मठे तु त्रिर्नष्टः पुंसि [illegible]वृक्षे द्वयोः पुनः ॥ ६५५ ॥

---

1. 'वरा' ग पाठः । 2. 'ध' ड पाठः । 3. 'द्वि' ग ड पाठः ।

---

* धृष्णुर्दृष्टे प्रगल्भे च (पृ २३८ श्लो ?) इति वैजयन्ती ।

शैलालिनि नटी तु स्त्री स्याद् विद्रुमलताह्वये।
भैषज्य इति कोऽप्याह परे त्वेतदसाध्विति ॥ ६५६ ॥

तृतीयवर्गोपान्त्यत्वात् तस्येत्याहुर्नडी हि सा।
नडः पुंस्यृषिभेदेऽथ नृशण्डो धमनाह्वये ॥ ६५७ ॥

लम्बे मात्यात् क्षत्रपूर्वक्षत्रियाजे नरे द्वयोः।
नडी तु विद्रुमलतासंज्ञे स्याद् भैषजे स्त्रियाम् ॥ ६५८ ॥

नद्यो नामरदत्तेन शब्दे ख्यातः सरस्वति।
स्तोतर्यपि नदी तु स्त्री निम्नगायां नतं पुनः ॥ ६५९ ॥

वक्रे नमस्कृते च त्रिर्बन्धुरेऽप्यथ तन्नपि।
अगुरौ तगरे* चैव गन्धद्रव्यप्रभेदयोः ॥ ६६० ॥

नमनेऽप्यथ नन्दा स्त्री स्नुहिसंज्ञमहीरुहे।
तिथिषु प्रतिपत्षष्ठयोरेकादश्यां तिसृष्वपि ॥ ६६१ ॥

पार्वत्यां चाथ ना पूर्वराजभेदेषु केषुचित्।
गोपालाधिपभेदेऽपि नन्दनाख्ये तु कर्मणि ॥ ६६२ ॥

नृस्त्रियोरथ नग्नः स्यात् पुंसि वैतालिकादिषु ।
दिगम्बरे तु त्रिः शास्त्रप्रोक्ताग्निरहिते तथा ॥ ६६३ ॥

नरः पुंस्यर्जुने विष्णोरवतारान्तरे नये।
मनुष्यजातौ तु द्वे स्यात् स्त्र्यर्थे नारीति तत्र च ॥ ६६४ ॥

नपुंसकं तु सलिले नखरे तु नखोऽस्त्रियाम्।
स्त्री तु शुक्त्याख्यभैषज्ये नक्रस्तु ग्राहसंज्ञके ॥ ६६५ ॥

द्वयोर्जलचरे ग्राह शाकटायन इत्यमुम्।
ग्राहादन्यत्र कुम्भीरेऽमरसिंहादयोऽभ्यधुः ॥ ६६६ ॥

---

१. 'द' क घ. ङ. पाठः, 'ग' ग. पाठः.

---

* 'नन्द्यावर्ते तु तगरः' (पु. ६१. श्लो. १३५) इति वैजयन्ती।

नवस्तु ना स्तुतौ त्रिस्तु नवीने स्त्री तु सा नवा ।
कार्पासीसञ्ज्ञके गुल्मे नष्टस्तु त्रिस्तिरोहिते ॥ ६६७ ॥

पलायिते मृते चाथ नष्टा स्त्री स्पृष्टमैथुना ।
या कन्यका भवेत् तस्या नान्दिस्तु स्त्री मुखे तथा ॥ ६६८ ॥

भेरीसञ्ज्ञकवाद्येऽथ देवदेवस्य शूलिन ।
प्रतीहारे नृलिङ्ग स्याद् धातावपि च नन्दतौ ॥ ६६९ ॥

न्यङ्कुर्गुरुकुलेवासिशिष्ये मुन्यन्तरे च ना ।
मृगभेदे द्वयोर्नप्ता पुनर्दौहित्रपौत्रयो ॥ ६७० ॥

पौत्रपुत्रेऽपि च द्वे स्याद् द्वेऽपत्ये तदनन्तरे ।
नपादेप तकारान्त सपे दान्त नपाद्ध्वनिम् ॥ ६७१ ॥

प्रमादात् सज्जनो दृष्ट्वा सर्पेऽपरयेऽभ्यभाषत ।
नन्दी नन्दीश्वरे मापे नाख्यनान्याश्च पाठके ॥ ६७२ ॥

ना नन्दिनी तु स्त्री गौर्या हरीतक्या ननान्दरि ।
सूक्ष्मैलायामयोध्याया प्रशस्ते वास्तुभूतले ॥ ६७३ ॥

नभः (क्लीनाभयो स्वर्गे स्वर्गाभयो क्लीव) सूर्ये वारिणि चाथ तत् ।
नभसी इति तु द्यावापृथिव्योराख्यिया पुन ॥ ६७४ ॥

श्रावणे मासि वर्षास्वप्यनयस्तु पठत्यमुम् ।
वृद्धेऽपि त्रिषु तत्र स्यादथ नाको नृलिङ्गक ॥ ६७५ ॥

सूर्येऽन्तरिक्षे तु स्वर्गेऽप्येन केचिन्नृशण्डयो ।
पुत्रयोस्तु द्वयोर्नागः पुनर्ना नागकेसरे ॥ ६७६ ॥

मेघे च नागदन्त्या च नागवल्ल्या च कश्चन ।
अस्त्री तु वङ्गे सीसे च द्वे तु मातङ्गयादसि ॥ ६७७ ॥

गजे सर्पे त्रि तु स्थूले तल्लिस्त्वथ क्रिया यदा ।
तदा नागीति ङीपि स्यान्नायस्त्विन्द्रे पुमांश्चि तु ॥ ६७८ ॥

---

१ सं क ख प इ पाठ  २ 'वु' इ पाठ

प्रभौ स्त्रीपुंसयोस्तु स्याद् याच्ञैश्वर्यादिकेष्वयम् ।
नाली त्रयी धान्यकाण्डे नाला चाब्जादिदण्डके ॥ ९७९ ॥

क्ली तु रन्ध्रे च शेफे च नादो ना स्तोतरि ध्वनौ ।
नदसम्बन्धिनि त्रिः स्यान्नाट्यं घोषाख्यलोहके ॥ ९८० ॥

नृत्ते तौर्यत्रिके च क्ली त्रि तु नाटयितव्यके ।
नारं क्ली भारताद् वर्षाद् दक्षिणे प्रतिजानके ॥ ९८१ ॥

कस्मिंश्चिदन्तरद्वीपे[1] त्रि तु स्यान्नरयोगिनि ।
नारीति योषित्तिन्त्रिण्योः स्त्री स्याल्लिङ्ग त्वनिश्चितम् ॥ ९८२ ॥

आपो नारा इति प्रोक्ता इत्यत्राथान्यलिङ्गकः ।
नायो नेतरि ना त्वेष प्रापणे स्त्री त्वथो दिशि ॥ ९८३ ॥

नायी नाभिस्तु जन्त्वङ्गे यस्य संज्ञा प्रतारिका ।
रथचक्रस्य मध्यस्थपिण्डिकायां च ना पुनः ॥ ९८४ ॥

आद्यक्षत्रियभेदेऽन्त्यमनौ मुख्यमहीपतौ ।
वर्षे तु भारते क्लीबं नाम तु क्लीबमम्भसि ॥ ९८५ ॥

अस्त्री तु प्रातिपदिके संज्ञायां चाव्ययं पुनः ।
प्राकाश्योपगमादीनामर्थानां द्योतकं विदुः ॥ ९८६ ॥

निष्कोऽस्त्री हेम्नि दीनारे साष्टकर्षशते पले ।
अजयः शाश्वतश्चैनं हेम्न एव पलेऽपठीत् ॥ ९८७ ॥

वक्षोभूषान्तरे कर्षे सज्जनस्तु रहस्यपि ।
त्रि तु निर्गतकार्ये[3]षु निजं तु त्रिः सनातने ॥ ९८८ ॥

आत्मीये च स्वभावे तु क्ली पुंसि त्वात्मनि स्मृतम् ।
निभं तु स्यात्पि व्याजे तत् तूत्तरपदं त्रिषु ॥ ९८९ ॥

सदृशे निष्क्यशब्दस्तु मर्त्यजात्यन्तरे द्वयोः ।
अन्धीशबरजे निष्ठ्या पुनः स्वातौ स्त्रियामथ ॥ ९९० ॥

---

१. 'रे' क. ख. ड. पाठः. २. 'मु' क. ग. ङ. पाठः. ३. 'न्ये' क. पाठः.

नीली स्त्र्योषधिभेदे स्यात् कार्पासिजे पुमांस्तु सः ।
कार्ष्ण्ये शौक्ल्ये च गुणयोस्त्रि तु तद्वति तत्र च ॥ ६९१ ॥

स्त्र्यर्थे नीलैव वल्ले स्याद् संज्ञाया तु द्वय भवेत् ।
नीला नीली च नील्येव प्राणिनि स्यादथो पुमान् ॥ ६९२ ॥

नीच शनैश्चरे नीचे स्वरे च त्रि तु तद्वति ।
वामने च निकृष्टे च नीड स्वर्ली कुलायके ॥ ६९३ ॥

गृहे च नीथशब्दस्तु पूर्वगजे क्वचिन्नरि ।
द्वे ब्राह्मणे धर्मशीले पुनस्त्रिरथ नीकयात् ॥ ६९४ ॥

द्वे ज्ञातौ च स्वर्गे चाथ न्युब्जो भव्याह्वये तरौ ।
ना तत्फले तु स्त्री त्रिस्तु कुब्जेऽधोमुख एव च ॥ ६९५ ॥

वैजयन्त्या तु ना व्याधावित्युक्त *न्यूङ्खवाक् पुनः ।
षट्स्वोङ्कारेषु ना त्रिस्तु सुन्दरेऽथाजयोऽवदत ॥ ६९६ ॥

अतिप्रिये द्वयोस्तु स्त सूतमागधयो पृथक् ।
नूधा (नूधाश्च स[1] अनूधाश्च) प्रोक्तौ सकारान्तौ मनीषिभि ॥ ६९७ ॥

नेत्रे नाड्या तरोर्मूले वस्त्रे दृशि मथो गुणे ।
स्त्री पुंसि चान्ये नेपस्तु नये वृक्षे पुरोहिते ॥ ६९८ ॥

ना त्रिस्तु भृतके नेमस्त्वन्ते वज्रे पुरोहिते ।
अर्धे च ना त्रि सदृशे समीपे चाथ खे नापि ॥ ६९९ ॥

नेत्वं द्यावापृथिव्योश्च पुमांस्तु शशलाञ्छने ।
नेता भव्यतरौ पुंसि तत्फले स्त्री त्रि सारथौ ॥ ७०० ॥

---

१ 'की' ह पाठ २ 'ह' क ग घ पाठ ३ 'च' ह पाठ ४. 'द्वे' ख पाठ ५ 'केनचित्' ह पाठ

---

* 'न्युङ्ख गम्यद्मनाऽ च ग्राम षट्सूपञ्चर्धोन च' इति तु मेदिनी ।

नीतिक्रियाकर्तरि च प्रभौ चाथ नृशण्डयोः ।
पद्मं सरोरुहे क्लीबं सङ्ख्याभेदे तथेन्द्रिये ॥ ७०१ ॥

गजबिन्दुष्वष्टकायां नागराजान्तरे तु ना ।
निधिभेदे व्यूहभेदे वर्णे पीतसितासिते ॥ ७०२ ॥

त्रि तु तद्वति पद्मा तु लक्ष्मीभार्ग्योः स्त्रियामियम् ।
तथैव पद्मचारिण्यां काश्चित् त्वाहाप्यविश्रुतम् ॥ ७०३ ॥

स्याद् पद्मनालिकायामित्यथ सामान्तरे प्लवः ।
उडुपे प्लवने मेघे जलपूरेऽप्यथ द्वयोः ॥ ७०४ ॥

चण्डाले मर्कटे मेके पक्षिजात्यन्तरे तथा ।
यस्याख्या मर्कटबिल* इत्यथ स्यात् त्रि[3] पक्षिषु ॥ ७०५ ॥

श्वेतवारलपर्यन्तहंससारसकादिषु ।
सौश्रुतोक्तेषु कैवर्तीमुस्तके तु नपुंसकम् ॥ ७०६ ॥

परं प्रकृष्टे द्विपति पूर्वावाक्प्रतियोगिनोः ।
अन्यस्मिन् केवले दूरे त्रिषु ना परमात्मनि ॥ ७०७ ॥

शण्डः परार्धसंज्ञायाः सङ्ख्याया द्विगुणात्मनि ।
सङ्ख्यायां वैजयन्ती तु तत्सङ्ख्येयेषु वस्तुषु ॥ ७०८ ॥

वा त्रिष्विलाह पथ्यं तु त्र्यनपेते पथो हिते ।
यागाङ्गेषु च नित्येषु विधुत्यादिषु मन्यते ॥ ७०९ ॥

ऋक्सामेषु तथा दाशरात्रिकेष्वथ सा स्त्रियाम् ।
जातिच्छन्दोविशेषेऽस्य स्यादार्याख्यस्य चान्तरे ॥ ७१० ॥

गणेषु त्रिषु यस्यादावर्धयोर्दृश्यते यतिः ।
बृहतीच्छन्दसो भेदे यस्य स्याद् द्वादशाक्षरम् ॥ ७११ ॥

---

१. 'वाः' ख. ग. पाठः. २. 'कवि' ग. पाठः. ३. 'त्रिषु' ग. पाठः.

---

* दात्यूहधाप दाक्टादिके क्वपरिश्रवौ (पु. २७. श्लो. १२) इति तु वैजयन्ती ।

उपोत्तमं पदं पादास्त्रयोऽन्येऽष्टाक्षराः स्मृताः ।
हरीतक्यां च पथ्याथो गायत्र्यादिषु सप्तसु ॥ ७१२ ॥

छन्दस्सु नप्यथो **पद्या** स्त्री मार्गे वृषले द्वयोः ।
क्ली पादबद्धग्रन्थे[1] स्यात् त्रिः पद्यं पदसाधुनि ॥ ७१३ ॥

पदाङ्कयोग्यदेशे च यत्नाकरणकं स्वयम् ।
पादस्य वेधकं तत्र शर्करादावथो नपि ॥ ७१४ ॥

**पत्रं** पुंस्यपि चान्येषां पक्षिपक्षे तरुच्छदे ।
वाहने छुरिकायां च **पर्णं** तु क्ली तरुच्छदे ॥ ७१५ ॥

पलाशवृक्षप्रसवे पलाशाख्यतरौ तु ना ।
**पलं** नृशण्डयोर्मांसे मानेऽप्यक्षचतुष्टये ॥ ७१६ ॥

**प्रस्थो**ऽस्त्री गिरिसानौ च कुडुबानां चतुष्टये ।
**प्रज्ञा** बुद्धौ स्त्रियां त्रिस्तु विदुषि **प्रश्नवाक्** पुनः ॥ ७१७ ॥

त्रि पुराणे छन्दसि तु क्लीबं पञ्चाशदक्षरे ।
**पङ्को**ऽस्त्री कर्दमे पापे **पण्डा** स्त्रीपुंसयोर्गतौ ॥ ७१८ ॥

तत्त्वबुद्धौ स्त्रियामेव पुमानेव नपुंसके ।
**पक्वं** तु क्वथिते नाशोन्मुखे परिणते त्रिषु ॥ ७१९ ॥

अजयस्तु खलेऽप्याह तस्यार्थश्चिन्त्यतां बुधैः ।
क्लीबं तु पचने विद्याच्छूतर्क्षारै[2]जदग्नि च ॥ ७२० ॥

**पटस्तु** वस्त्रे केचित् तु सुवस्त्रे पुन्नपुंसकम् ।
**पटी** तु स्त्री विशिष्टे स्यात् पटे प्रावरणात्मके ॥ ७२१ ॥

इति कश्चित् प्रियालाख्यतरौ ना क्ली तु तत्फले ।
**पच्छः** शिलायां ना त्रिस्तु पादपीठेन गन्तरि ॥ ७२२ ॥

---

१. 'न्य.' क. ख. घ. ङ. पाठः. २. 'रे च द' ग. पाठः.

पार्ष्णिसंज्ञे[1] तु पच्छी स्त्री भवेद् वारुटकान्तरे ।
पत्त्रं स्कन्ने त्रिषु स्त्री तु जिह्वायां पद्रवाक् पुनः ॥ ७२३ ॥
पुंसि ग्रामनिवेशे त्रिः शून्ये पर्वस्तु ना हरे ।
इक्ष्वादीनां तु काण्डस्थग्रन्थिमध्ये नपुंसकम् ॥ ७२४ ॥
पर्वि[2]ः काके द्वयोर्हिंसे पुनस्त्रिषु पतिस्तु ना ।
पाणिग्राहे च पततिधातौ चायाजयोऽब्रवीत् ॥ ७२५ ॥
गतौ मूलेऽप्यथो पत्नी भार्यायां स्त्री त्रि तु प्रभौ ।
वृद्धादिस्तु पतिर्यस्यास्तत्रान्यार्थसमासके ॥ ७२६ ॥
वृद्धपत्नी वृद्धपतिरित्याद्यं रूपमुन्नयेत् ।
ग्रामादेश्च यदा स्त्र्यर्थः स्वामित्वेन विवक्ष्यते ॥ ७२७ ॥
ग्रामपत्नी ग्रामपतिरित्याद्यं तत्र च द्विधा ।
पत्तिः पुनः स्त्रियां ज्ञेया पतने पदनेऽपि च ॥ ७२८ ॥
एकेभैकरथत्र्यश्वपञ्चपद्गबले तथा ।
लेपेन कृतलेखायां बाह्वादौ पत्रिके तु ना ॥ ७२९ ॥
पठिस्तु विदुषि त्रिः स्यान्ना तु वेदस्य पाठके ।
स्त्रियां फैलकिकायां स्यादल्पायां युद्धकारिणाम् ॥ ७३० ॥
पचिस्तु नाग्नौ पचतौ बुभुक्षायां तु सा स्त्रियाम् ।
पणिस्तु वणिजि त्रि स्याद् धातौ ना पणनार्थके ॥ ७३१ ॥
पर्पीस्तु सूर्ये रश्मौ च ना हस्तिनि तु स द्वयोः ।
पटुः पुंसि पटोल्याख्यवल्लीजातौ रसान्तरे ॥ ७३२ ॥
लवणाख्ये तद्वति तु त्रिषु निर्व्याधिशूरयोः ।
अमन्ददक्षयोश्चान्ये विशदप्रज्ञ ऊचिरे ॥ ७३३ ॥
अन्यो विस्पष्ट आचष्टे ब्रूते त्वजयशाब्दिकः ।
तीक्ष्णे च निस्त्वरे चैषु यदा स्त्र्यर्थेऽस्य वर्तनम् ॥ ७३४ ॥

१. 'ष्टी' ख. पाठः, 'ष्ठि' ग. पाठः. २. 'त्मिः' क. घ. पाठः. ३. 'दात्पर्थ स्वा' क. घ. पाठः. ४. 'दि' ख. क. पाठः. ५. 'पत्लिका' ख. क. पाठः.

तद्वा पट्टी पट्टुरिति क्लीं तु स्याल्लवणद्वये ।
ऊषाख्ये सैन्धवाख्ये चेत्येव नानाब्रुवन् बुधाः ॥ ७३५ ॥

प्रत्यक् प्रतीच्येऽभिमुखे प्रतीच्यभिमुखे त्रिषु ।
देशे पुंसि प्रतीची तु पश्चिमायां दिशि स्त्रियाम् ॥ ७३६ ॥

प्रथमापञ्चमीसप्तम्यर्थेष्वेषोऽपि चाव्ययम् ।
पर्वे सर्वेऽपि चाचार्याः क्लीबमन्ये समामनन् ॥ ७३७ ॥

भाष्यकारस्तु भगवान् योगसूत्रे प्रयुक्तवान् ।
गुणपर्वाणि इत्येव पष्ठीतत्पुरुषे नरम् ॥ ७३८ ॥

विषुवाद्यावचसरे पञ्चदश्यां तथोत्सवे ।
प्रतिपत्पञ्चदश्योश्च सन्धौ ग्रन्थिद्वयान्तरे ॥ ७३९ ॥

इक्षुवेण्वादिदण्डानां ग्रन्थौ त्वेवेति केचन ।
पद्वा वत्से द्वयोः पुंसि रन्ध्ये[2] गत्यवमानयोः ॥ ७४० ॥

पक्षी पुंसि शरे द्वे तु श्येने सर्वखगेष्वपि ।
पत्रिणी तु स्त्रियां पत्न्यां कनिष्ठत्वसारि स्मृता ॥ ७४१ ॥

पत्रं तु (यत्रे यस्यापि?) तैत्र स्याद् भेयलिङ्गकम् ।
पत्री द्वयोर्गजे पद्मवति तु त्रि स्त्रियां पुनः ॥ ७४२ ॥

पद्मिनी सरसीलक्ष्म्योः पद्मस्तम्बेऽथ पक्षिवाट् ।
द्वे खगे पण्डिते तु त्रि पक्षवत्यथ पक्षिणी ॥ ७४३ ॥

पक्षाभ्यामिव याहोभ्यां रात्रिर्युक्तात्र सा स्त्रियाम् ।
प्राणास्तु पुंस्यसुष्वेते स्वस्मिन्नर्थे प्रचक्षते ॥ ७४४ ॥

बहुत्वमस्याथ बले वायुनायुनिशेषयोः ।
छन्दानां प्रथमे साम्नि चक्षुरादीन्द्रियेषु च ॥ ७४५ ॥

शाशास्त्र्यभेपत्रेऽर्थे त्रि पूर्णे क्लीबं तु पूरणे ।
त्रयी तु भाजने पात्री क्ली तु योग्ये स्रुगादिके ॥ ७४६ ॥

१ 'न्यो' क घ पाठः । २ ख ङ पाठः । ३ 'य' क ग ङ घ ङ. पाठः ।
४. 'नु' क ख घ ङ. पाठः ।

आढके पण्डिते वित्ते नद्याः कूलद्वयान्तरे।
प्रधानाङ्के च सुगुणे पारस्तु नरि पारणे॥ ७४७॥

क्ली नद्यादेः परे तीरे घटीसञ्ज्ञे तु गोदुहाम्।
दोहपात्रे स्त्रियां पारी पालस्तु त्रिषु पालके॥ ७४८॥

ना त्राणे जडकन्याया पुनः पाली स्त्रियामियम्।
अस्त्री द्रोणाह्वये दारुपात्रे पाकस्तु पर्वते॥ ७४९॥

पक्तौ परिणतौ दैत्यभेदे सूर्ये तरौ फले।
करमर्दतरौ पुंसि तत्फले तु नपुंसकम्॥ ७५०॥

शिशौ द्वे त्रिः प्रशस्येऽथ पातं त्रिस्त्रातशुष्कयोः।
ना तु राहौ च पतने क्ली तु त्राणे च शोषणे॥ ७५१॥

पापस्तु कुत्सिते क्रूरे त्रिषु क्लीबं तु दुष्कृते।
विभीतकफले चाथ विभीतकतरौ पुमान्॥ ७५२॥

पाशो ना पाशनाया[1] सुब्धातौ. पाशयतेर्घञि[2]।
रज्ज्वादिमान्तविन्यस्तग्रन्थिभेदे तथा पुनः॥ ७५३॥

मृगपक्ष्यादिबन्धार्थयन्त्रभेदे च तत्कृते।
अन्ये त्वाहुः परः कर्णात् सुकर्णे केशतश्चये॥ ७५४॥

स्त्री तु केशाच्छिखाया स्यात् केशपाशिन्यथ त्रिषु।
याप्ये प्रत्ययसञ्ज्ञः स स्वार्थिको निहतस्वरः॥ ७५५॥

पाठो ना पठने स्त्री तु प्राचीनाख्यलतान्तरे।
पाठा पार्श्वे तु न स्त्री स्यात् पर्शुवृन्दात्मके तनोः॥ ७५६॥

कक्षाधोवयवे किञ्च वक्रोपायेऽन्तिकेऽथ ना।
आर्हताना तीर्थकरभेदे पा(र्श्वौ? र्श्वौ) तु ते स्त्रियौ॥ ७५७॥

द्यावापृथिव्योः पानं तु त्राणशोषणयोर्नपि।
पीतौ च ना तु निःश्वासवायौ प्रायः पुनः पुमान्॥ ७५८॥

१. 'तौ' ग. पाठः   २ 'तौ घ' ग. पाठः.

बाहुल्येऽप्यशनत्यागे मृतौ प्रगमने तथा ।
बाल्यादिवयसि त्रिस्तु तुल्ये[1]ऽर्थे[2] प्रात्ययवाक् पुनः ॥ ७५९ ॥
प्राग्दक्षिणे शरावत्या देशे ना प्राग्भवे त्रिषु ।
पाक्यं तु त्रिषु पक्तव्ये क्लीबं तु विडसंज्ञके ॥ ७६० ॥
लवणे भूमिलवणसंज्ञे च लवणेऽथ नपुं ।
प्राध्वं स्याद् दूरमार्गे च बन्धने चेति मन्यते ॥ ७६१ ॥
प्रवणे तु स्त्रियामेव केचिदन्ये तु मन्वते ।
आनुकूल्यार्थकं प्राध्वमव्ययं चेत्यथ स्त्रियाम् ॥ ७६२ ॥
पार्ष्णिरुन्मत्तनार्यां स्यात् पादग्रन्थेरधोऽपि च ।
पुमांस्तु पृतनाकक्ष्या पाण्डुस्तु नरि राजनि ॥ ७६३ ॥
धृतराष्ट्रानुजे पाण्ड्यदेशराजान्तरेऽपि च ।
शालिजात्यन्तरे रोगभेदे खर्जूरपादपे ॥ ७६४ ॥
वर्णभेदे तद्वति तु त्रि खर्जूरफले तु नपुं ।
पातुः पुंसि विरिञ्चेऽन्यस्त्वाह रक्षितरि त्रिषु ॥ ७६५ ॥
प्राची तु पक्षिमृगयोर्द्वयोरथ नपुंसकम् ।
पाथिज्योतिषि तथा च स्वर्गे चन्द्रेऽप्यथास्त्रियाम् ॥ ७६६ ॥
सूर्ये प्रियस्तु करुणसंज्ञवृक्षे धवे त्रि तु ।
वल्लभे सुन्दरे स्त्री तु प्रियाभीप्सितयोषिति ॥ ७६७ ॥
पिङ्गो मण्डलिसर्पाणां प्रभेदे महिषे द्वयोः ।
ना पिशङ्गाह्वये वर्णे ऋषिभेदे च सर्षपे ॥ ७६८ ॥
पिशङ्गवर्णयुक्ते तु त्रि स्त्रियां पिङ्गलाह्वये ।
पिङ्गा पक्ष्यन्तरे ब्रह्मगीतिसंज्ञे च लोहके ॥ ७६९ ॥
पिण्डो गुडेरके† पुंसि सङ्घातजीवयोरपि ।
भजयस्तु निर्वापेऽपि शब्दवित् प्राब्रवी[3]दमुम् ॥ ७७० ॥

---

१. 'र्येऽर्थे' क घ ङ पाठः २. 'स्य' ग ग पाठः ३. 'दिदम्' ग पाठः

† 'पिण्डा गुडरक । गन्धोरस गडोलश्च' (पृ १६७ श्लो १०१) इति तु वैजयन्ती

पुद्गले चोलसंज्ञे च भेषजे वपुषि त्वमुम् ।
पुमांसं कश्चिदाह स शण्डं पिण्डी त्वियं स्त्रियाम् ॥ ७७१ ॥

भक्तपिण्डे देवपीठेऽप्यथ रोमपुटे पिटः ।
कण्डोले च पुमान् क्ली तुच्छदिशोऽवयवान्तरे ॥ ७७२ ॥

पिटादिकाह्वये पिच्छा पुनः शल्मलिवेष्टके ।
यवागवामोदनोद्भूतमण्डे प्राह तु सज्जनः ॥ ७७३ ॥

सर्वपिच्छिलमण्डेषु पक्षिपक्षे तु नप्यदः ।
पिच्छस्तु गुणभेदे स्याद् यद्वान् पिच्छिल उच्यते ॥ ७७४ ॥

शाकटायन इत्याह पित्र्या पुनरियं स्त्रियाम् ।
पौर्णमास्यां त्रि तु पितृदैवते पितुरागते ॥ ७७५ ॥

पितृसाध्वादिके चाथ पत्तु पतितुमेष्टरि ।
पित्सं त्रिर्विहगे तु द्वे पीतस्तु नरि गन्धके ॥ ७७६ ॥

हरिद्रावर्णसदृशे वर्णे तद्वति [illegible] त्रिषु ।
पिबतेः पीयतेश्चापि क्रियायाः कर्मतां गते ॥ ७७७ ॥

क्ली तु पीतिक्रियायां स्याद् हरिद्राया तु सा स्त्रियाम् ।
पीताथ पीथशब्दस्तु क्लीबं क्षीरे जलेऽपि च ॥ ७७८ ॥

बालपेयघृते तु स्यादन्ये तु नवनीतके ।
अश्वौ च पीतिस्त्वश्वे द्वे क्रियायां पिबतेः स्त्रियाम् ॥ ७७९ ॥

पीतुर्ना भास्करे बालघृतपानार्थभाजने ।
चक्षुषि द्वे तु विहगे पीलुस्तु नरि पादपे ॥ ७८० ॥

ज्ञेयो गुडफलाभिख्ये काण्डे पुष्पेऽथ सज्जनः ।
वृक्षे कट्फलनाम्न्याह ब्रूते त्वजयशाब्दिकः ॥ ७८१ ॥

कालास्थिखण्डकेऽप्येन द्वे त्विभे पीयुवाक् तु ना ।
आदित्ये किरणे काले स्याद्गुलूके तु स द्वयोः ॥ ७८२ ॥

१. 'द्' ग. पाठ. २. 'त्रा' क. ख. घ. ङ पाठ..

पुष्यस्तु ना कलियुगे नक्षत्रे तिष्यनामनि ।
तद्युक्ते कालसामान्ये त्रिस्तु जातेऽत्र नप् पुन ॥ ७८३ ॥

वैरूपाष्टकवर्गस्य स्यादन्त्ये साम्नि तत् तथा ।
कूष्माण्डस्य फले पुण्यं पुन. क्ली जलपुष्पयो ॥ ७८४ ॥

व्योम्नि हेम्नि तथा धर्मे (व्रु[1] व्र)ते च शुभकर्मणि ।
गङ्गार्घ्ययोस्तु पुण्या स्त्री मनोज्ञे तु त्रि पावने ॥ ७८५ ॥

अजयस्तु मनोज्ञात् स भेदेनाह मनोहरे ।
पुण्ड्रं तु तिलके न स्त्री पुमानिक्ष्वन्तरे क्रिमौ ॥ ७८६ ॥

पुष्पगुल्मेऽतिमुक्ताख्ये नाऽरुद्धदे तु भूम्नि च ।
वरेन्द्रीसञ्ज्ञकेऽथ स्याद् धवलाया गवि स्त्रियाम् ॥ ७८७ ॥

पुण्ड्रा पुष्पं तु कुसुमे क्लीबमन्ये तु पुस्यपि ।
आर्तवे योषिता ना तु विकासे स्त्री तु पुष्प्यसौ ॥ ७८८ ॥

भेषजे तु बलाख्येऽथ कर्तरीलाम्नि पत्रिणाम् ।
स्यात् पुङ्खोऽवयवे पुंसि श्येनपक्षिणि तु द्वयो ॥ ७८९ ॥

पुत्रस्तु तनये पुंसि पुत्री दुहितरि स्त्रियाम् ।
पुटी[3] त्रयी करण्ड्या क्ली नगरे ना समुद्गके ॥ ७९० ॥

द्वे नृजात्यन्तरे शुद्रकवटीजे प्लुतं पुन ।
प्लवने क्लीबमश्वस्य गतिभेदेऽप्यथ त्रिषु ॥ ७९१ ॥

तद्वत्यश्वे त्रिमात्रे च वर्णे सिक्तेऽप्यथास्त्रियाम् ।
पुस्तो लेख्ये क्लि लेप्यादिकर्मणि द्वे तु पुल्कसात् ॥ ७९२ ॥

दर्वीकराख्यभुजगभेदे कीटक्रमिष्वपि ।
कीटेषु च पुरं तु क्ली पुस्यन्ये गेहदेहयोः ॥ ७९३ ॥

---

१. 'न्ये तद्धर्मे च' ग पाठ. २ 'ण' क ग घ ट पाठ. ३ पाठ.. ४ 'भेद ह' ख. ह पाठ.

ध्यामाख्यभेषजस्तम्बे सर्वतोभद्रकादिषु ।
शैवागमप्रसिद्धेषु मण्डलेष्वपि ना तु सः ॥ ७९४ ॥

गुग्गुलौ नगरे खेपा पुरी लिङ्गत्रये द्वयोः ।
मर्त्यजात्यन्तरे शूद्रमहिषीजेऽथ केचन ॥ ७९५ ॥

आहुः पुरिमिकारान्तामपि स्त्री नगरे बुधाः ।
कश्चित् तु पुंसि राड्याह ना तु शैलान्तरे पुरुः ॥ ७९६ ॥

गङ्गाद्वारप्रदेशस्थे मनुष्ये तु द्वयोरयम् ।
महति त्रिषु नैरुक्ताः पुनर्बहुपुं मन्वते ॥ ७९७ ॥

[1] पूर्वा स्त्रियामिन्द्रादिशि त्र्यपरप्रतियोगिनि ।
दिग्देशकालत्रिपर्येष्वग्रप्रथमयोरपि ॥ ७९८ ॥

पुराणे पुंबहुत्वे तु पूर्वजेष्वेष वर्तते ।
पितामहादिष्वथ ना पूज्यः स्याच्छ्वशुरे त्रि तु ॥ ७९९ ॥

पूजनीयेऽथ पूरो ना नद्याः सलिलबृंहणे ।
पुनर्नवायां नृस्त्री तु पूर्तौ पूरी तु सा स्त्रियाम् ॥ ८०० ॥

वंशवाद्येऽथ पूर्तं क्ली खातादौ पुण्यकर्मणि ।
त्रि तु पूर्णे रक्षिते च पूर्णं तु सलिले नपि ॥ ८०१ ॥

पूर्त्तौ च पौर्णमास्यां तु पूर्णा स्त्री स्यात् तिथिष्वपि ।
पञ्चमीदशमीपञ्चदशीषु तिसृषु त्रि तु ॥ ८०२ ॥

पूरिते च समग्रे च प्रवदन्ति मनीषिणः ।
आकर्णकर्षणे चेषोः पूगस्तु निवहे पुमान् ॥ ८०३ ॥

क्रमुकेऽद्रौ च केचित् तु पूगीमर्थेऽत्र मन्वते ।
स्त्रियां तस्य फले क्लीबं पूपस्तु नरि पादपे ॥ ८०४ ॥

ब्रह्मदारुसमाख्येऽथ पूपा स्त्रीपुंसलिङ्गकः ।
वृद्धिक्रियायां पूतिस्तु तृणजात्यन्तरे पुमान् ॥ ८०५ ॥

१. 'द्व्ये' ख. ङ. पाठः. २. 'नि' क. ख. ग. ङ. पाठः.

दुःखदुर्गन्धयोश्च स्याद् दुर्गन्धवति तु त्रिषु ।
पवनाख्यक्रियायां तु स्त्री कुन्त्यां तु पृथा स्त्रियाम् ॥ ८०६ ॥

त्रयोदशाङ्गुले त्वेष माने पुंसि मुनीरित ।
मुनिराख्यविरुद्धत्वात् पृथो हस्ततले जगौ ॥ ८०७ ॥

व्याख्याता येन तेनैतदसम्यगभिभाषितम् ।
पृश्निर्ना किरणे स्वर्गे सूर्ये देवान्तरेषु च ॥ ८०८ ॥

क्लीब तुले च साम्नोश्च बृहद्भिरिति गीतयो ।
त्रिषु स्वल्पतनुर्जन्तौ बिन्दुचित्रपशावपि ॥ ८०९ ॥

विराज पृभय इति त्वत्र वर्णनिबन्धन ।
बिन्दुमत्त्वनिमित्तो वा प्रयोग इति संशय ॥ ८१० ॥

पृथुः पुंस्यादिराजन्यभेदे वैन्य इति श्रुते ।
अन्यत्रापि क्वचित् पक्ष्ये वासुदेवस्य राजनि ॥ ८११ ॥

राजर्षित्रिशङ्कुसंज्ञस्य जनकेऽप्यनरण्यजे ।
विस्तीर्णे तु त्रि तत्रापि पृथु पृथ्वीति वा स्त्रियाम् ॥ ८१२ ॥

स्त्री तु पृथ्वी पृथिव्यां स्यादुभय कृष्णजीरके ।
पृथु पृथ्वी च बाष्पाख्यभेषजे पृथुरेव सा ॥ ८१३ ॥

मर्कटे तु द्वयो क्ली तु पृषत् पुण्ड्रे तु (१) विप्रुषि ।
तथा दध्युपसिक्ताज्ये पशुगात्रस्थबिन्दुषु ॥ ८१४ ॥

तन्तुवायस्य तन्त्रे च मृगभेदे तु स द्वयो ।
त्रयी तु पेटी पेडाया पेटिकाया च सा पुन ॥ ८१५ ॥

पेटा दास्या स्त्रियामेव पेया तु विरलात्मनि ।
यवाग्वा त्रिषु पातव्ये रक्षितव्येऽथ नृस्त्रियो ॥ ८१६ ॥

प्रेङ्खा प्रेङ्खोलने च स्यादासन्द्या च द्वयो पुन ।
दासे प्रेतस्तु मृतके त्रि द्वे मृतान्तरेऽथ नरे ॥ ८१७ ॥

---

१ 'क' ग पाठ

पेत्वं तसे भुवो भागे द्वे तु मेपे परं पुनः।
पशौ गालितमुष्केऽमु व्याचष्टे तदसद् विदुः ॥ ८१८ ॥
पेरुर्ना भास्करे शैले समुद्रे द्वे तु पक्षिणि।
कलविङ्काह्वयेऽथ स्यात् प्रेम प्रेमा च न स्त्रियाम् ॥ ८१९ ॥
स्नेहे केलौ च दासे तु प्रेष्यो द्वे प्रेषवत् पुनः।
प्रेषितव्येऽथ पोतो ना यानपात्रे द्वयोः पुनः ॥ ८२० ॥
शिशौ दशाब्दद्विरदे पुंनयोरपरे विदुः।
चतुष्पदां तु तरुणे केचिदन्ये प्रचक्षते ॥ ८२१ ॥
प्रोथोऽस्त्री हयघोणायां त्रि प्रिये यूनि तु द्वयोः।
प्रोष्ठः पुंस्युपमे प्रोष्ठी शफर्यां स्त्र्यथ पौरगाक् ॥ ८२२ ॥
बलभद्रे श्वेतशालौ ना क्ली तु ध्यामकाह्वये।
भेषजे पुरवास्यादिपुरसम्बन्धिनि त्रिषु ॥ ८२३ ॥
पौषस्तु तैषमासे ना सामभेदे नपुंसकम्।
पौषी तु पौर्णमास्यां स्त्री संयुक्ता पुष्यभेन या ॥ ८२४ ॥
पौंस्नं पुंसवने क्लीबं पुंसः सम्बन्धिनि त्रिषु।
फलं फाले धने बीजे निष्पत्तौ भोगलाभयोः ॥ ८२५ ॥
सस्ये हेतुकृते चर्मसन्नशस्त्रनिवारणे।
शस्त्राणां च मुखेऽ[३]त्रोक्तस्थावराणां प्रसूनयोः ॥ ८२६ ॥
क्लीं[४] पुंस्यप्यपरे ना तु करमर्देऽथ सा स्त्रियाम्।
कार्पास्यां लवलीराजकोशातक्योः फलाथ सा ॥ ८२७ ॥
कोशातक्यां फलिन्यां च ताम्रादिफलके तथा।
फली स्यादजयस्त्वाह मत्स्यभेदेऽपि शब्दवित् ॥ ८२८ ॥
फल्गु तु त्रिष्वसारे स्त्री काकोदुम्बरिकाह्वये।
वृक्षभेदे नि तु फली फलयुक्ते स्त्रियां पुनः ॥ ८२९ ॥

---

१. 'के' ग पाठः २. 'द' ङ पाठः ३. 'श्रो' ग घ पाठः
४. 'क्लीब पुंस्यप' ग पाठः

कोशातक्या च फलिनी प्रियङ्ग्वाह्वयपादपे ।
फालो लाङ्गलकूटे ना श्वेतार्के दाडिमे तथा ॥ ८३० ॥
निष्पत्तौ शरणेऽथ स्त्री तक्कोले च फलस्य तु ।
विसरादौ त्रि फुल्लं तु त्रये विकसने त्रि तु ॥ ८३१ ॥
आश्चर्ये स्याद् विकसितेऽप्यथो विशरणे नपि ।
निष्पत्तौ चाथ शण्ड स्यात् पुंसि चत्वरे विदु ॥ ८३२ ॥
बलं रूपेऽस्थनि स्थाल्ये शक्तिरेतश्चमूष्वथ ।
बलभद्रे याचनाख्ययवभेदे च नाथ तम् ॥ ८३३ ॥
कश्चिद् दैत्यान्तरेऽप्याह तदसाध्विव लक्ष्यते ।
दैत्ये दन्त्यौष्ठ्यवर्णादेर्नरशब्दस्य दर्शनात् ॥ ८३४ ॥
त्रिषु तु स्याद् बलवति स्त्री तु वाट्यालके बला ।
पिप्पल्या च परे त्वेन काके प्राहुर्द्वयोरिति ॥ ८३५ ॥
अन्ये तु तदसत् प्राहुर्दन्त्योष्ठ्यादित्वमक्षरात् ।
बकस्तु ना दाल्भ्यमुनावेकचक्रापतावपि ॥ ८३६ ॥
द्वे तु कह्वह्वये पक्षिभेदे जात्यन्तरे नृणाम् ।
पुष्करीक्षत्रियोद्भूते ब्रह्मस्तृष्यन्तरे पुमान् ॥ ८३७ ॥
सूर्ये स्वर्गे द्वयोस्तु स्याद् ब्रह्मणे तुरगेऽपि च ।
बलिः पूजोपहारे ना भागधेये नृपस्य च ॥ ८३८ ॥
प्राणनार्थकधातौ च दैत्यभेदेऽथ नृस्त्रियो ।
देवतार्चनतूर्येऽथ बर्हि श्येनशाकयो ॥ ८३९ ॥
बभ्रुर्ना केशवे पूर्वशानभेदर्षिभेदयो ।
अग्नौ बटारवृषभे धने वर्णे च पिङ्गले ॥ ८४० ॥
त्रि तु तद्वति गल्वाटे द्वे न्योलौ नकुलेऽपि च ।
बभ्रू कपिला या स्त्री दन्तुर्ना व नि स्वरे ॥ ८४१ ॥

---

१ 'क ग ह पाठ २ दान्तु क च दान्तु ख, 'गान्तु ग । दद पाठ, 'ड' क घ पाठ ४ 'धु' ग पाठ

लग्नाच्चतुर्थराशौ च बन्धुं सांवत्सरा विदुः ।
मेषलिङ्गं त्वविशेष्ये बन्धुर्नीति तु सूत्रकृत् ॥ ८४२ ॥
शब्दस्वरूपनिष्ठत्वे माहेत्याहुर्बहुस्तु ना ।
व्रतान्तहोमवह्नौ स्याद् मेयालिङ्गं तु वाच्ययोः ॥ ८४३ ॥
त्रित्वादिसङ्ख्यासङ्ख्येये महार्थेऽप्यत्र च स्त्रियाम् ।
यदा वृत्तिस्तदा बह्वी बहुरित्यपि वा द्वयम् ॥ ८४४ ॥
ब्रह्मा रुद्रहृषीकेशविरिञ्च्यर्केन्दुवह्निषु ।
यज्ञे विप्रे च ऋग्वादिप्रवृत्तिभेदे च पुस्त्ययम् ॥ ८४५ ॥
ब्रह्मं तु वेदे मन्त्रेऽन्ने खेऽध्यात्मात्मतपस्सु च ।
मोक्षे जपे धने चाथ बलभद्रे च(ले[1]ली)* पुमान् ॥ ८४६ ॥
कारवेल्लविशेषे च बृहत्कर्कोटकाह्वये ।
शोणाम्लाने नालिकेरे माषधान्ये च मज्ज्ञि च ॥ ८४७ ॥
षष्ठे शरीरधातूना बलयुक्ते(पुं[1]तु) स त्रिषु ।
बर्हिस्तु क्ली कुशे यज्ञे जले व्योम्नि महत्यपि ॥ ८४८ ॥
ना त्वग्नौ बाणशब्दस्तु बलिपुत्रासुरे पुमान् ।
इक्ष्वाकोश्च प्रपौत्रे स्यात् तथैवानोकहान्तरे ॥ ८४९ ॥
ककुभाख्ये नृशण्डस्तु शरतद्भेदयोरथ ।
बाणा नृस्त्री नीलझिण्ट्यां बालस्तु शिशुमूर्खयोः ॥ ८५० ॥
त्रिर्ना तु नालिकेरेऽथ पञ्चवर्षगजे द्वयोः ।
बाला तु मल्लिकाभेदे हरिद्रायां च सा स्त्रियाम् ॥ ८५१ ॥
ब्राह्मं त्रिर्ब्रह्मसम्बन्धे स्त्री तु सप्तसु मातृषु ।
एकस्यां दिशि चोर्व्यां ब्रह्मरीत्याख्यलोहके ॥ ८५२ ॥
मत्स्याक्ष्याख्यतृणस्तम्बे वाचि ब्राह्मी पुमान् पुनः ।
रात्रेः स्यात् पश्चिमे यामे पुमांस्त्वश्रुणि बाष्पवाक् ॥ ८५३ ॥

---

१. 'त्वा' ख ग पाठः.

---

* 'नालिकेरे तु लाङ्गली । दाक्षिणात्योऽप्यथ लाङ्गलः गुच्छ कूर्चशेखरः । सदाफलो बली च' (पृ. ६२. श्लो. २२०,२२१) इति वैजयन्ती ।

शफः पुंसि च शण्डे च लाङ्गलाङ्गान्तरे खुरे ।
महावीराख्यपात्रस्य परिग्रहणकाष्ठयोः ॥ १३१३ ॥

पृथश्च यस्येत्यृचि च गीतयोः सामभेदयोः ।
शयो ना शयने पाणौ कृकलासे तु स द्वयोः ॥ १३१४ ॥

शवस्तु कुणपे न स्त्री जले तु क्लीं गतौ तु ना ।
शप्पं बालतृणे क्लीबं रूपे च भगवांस्त्वमुम् ॥ १३१५ ॥

नरं वररुचिः प्राह शस्त्रं तु क्लीबमायुधे ।
अयस्युङ्मन्त्रभेदेषु शसायाः साधनेषु च ॥ १३१६ ॥

छुरिकायां तु शस्त्री स्त्री शल्कं तु शकले नपि ।
केचित्त्वाचरसे प्राहुः शकले स्याच्च वल्कले ॥ १३१७ ॥

मुद्गरे च त्रिषु त्वेष भीतौ पालरि चाप्यथ ।
शक्रो ना पशुविष्ठायां देशभेदे जले तु नप् ॥ १३१८ ॥

शका तु गवयाभिख्यपशुजातौ स्त्रियामियम् ।
शरः पुंसि शरद्घायौ क्षीरादेर्मुखबन्धने ॥ १३१९ ॥

इन्द्रसंज्ञतृणस्तम्बे हिंसामार्गणयोरपि ।
क्लीं तु ह्रीबेरजलयोः शतं त्वस्त्री बहुन्यपि ॥ १३२० ॥

दशानां दशके चाथ शंस्यः शंस्ये त्रि ना पुनः ।
अमावाहवनीयाख्ये शर्वस्तु स्याच्छिवे पुमान् ॥ १३२१ ॥

शर्वाणी तु मृडान्यां स्त्री शक्तिस्त्वृष्यन्तरे पुमान् ।
स्त्री साङ्ख्यप्रकृतौ लक्ष्म्यां सामर्थ्ये नीतिवेदिनाम् ॥ १३२२ ॥

प्रसिद्धासु प्रभावादिजातासु स्यात् तिसृष्वपि ।
नैरुक्ताः कर्मणि प्राहुः शस्त्रभेदे तु सा द्विना ॥ १३२३ ॥

शक्तिः शक्ती च तत्रापि शस्त्रं कासूरिति स्मृतम् ।
शर्विस्तु कुञ्जरे क्रौञ्चसंज्ञपक्षिणि च द्वयोः ॥ १३२४ ॥

---

१. 'नी' ख. पाठ. २. 'ष्मा' ख. पाठ. ३. 'शु' क. ख. ङ. पाठः. ४. 'कि' ख., ङ., 'लि' क. पाठः.

शद्रिस्तु[1] पर्वते पुंसि द्वयोस्तु गजमेघयोः ।
शङ्कुः शम्भौ चतुर्वक्त्रे पुमान् सङ्ख्यान्तरेऽपि च ॥ १३२५ ॥
शतादिसङ्ख्यानप्लवस्य चाधार्थे[3] लिङ्गमन्वशात् ।
शङ्कुः पुंसीति भगवांस्तच्च सङ्ख्यान्तरं विदुः ॥ १३२६ ॥
कोटीनां लक्षमाचार्याः केचित् पुंशण्डयोः पुनः ।
कीले मेढ्रेऽस्त्रभेदे च गोत्रे चान्ये तु मन्वते ॥ १३२७ ॥
वृक्षपत्रसिराजाले द्वे तु मार्जारहंसयोः ।
जलजन्तुप्रभेदे च राक्षसेऽथ नपुंसकम् ॥ १३२८ ॥
एतमुस्यादिवर्गस्य तृतीये साम्न्यथापरे ।
पुन्नपुंसकयोरेनमविशेषेण मन्वते ॥ १३२९ ॥
अप्राण्यर्थे तथा प्राह शङ्कुरप्राणिगोचरः ।
इत्यर्धर्चादिवर्गस्य वैजयन्त्या प्रपञ्चने ॥ १३३० ॥
शयुस्तु नार्के स्तम्भे च द्वयोस्त्वजगरेऽथ ना ।
शरुः स्यादायुधे क्रोधे द्वयोस्तु स्यात् कपिञ्जले ॥ १३३१ ॥
शत्रुस्तु पुंस्यमित्रे स्याल्लग्नात् षष्ठे च राशिके ।
त्रि तु शातयितर्युक्तमिन्द्रशत्रुपदे यथा ॥ १३३२ ॥
शस्ता प्रजापतौ पुंसि चण्डाले तु द्वयोरिति ।
कश्चित् कश्चित्तु शस्ता स्यात् स्तोतरि त्रिषु ना पुनः ॥ १३३३ ॥
मित्रावरुणयोश्चेति पितरीति च मन्यते ।
शाका तु हस्ते मन्थादौ पुंस्यथो शकरी स्त्रियाम् ॥ १३३४ ॥
नद्यां विद्युति काञ्च्यां च वाह्ये छन्दोन्तरे तथा ।
षट्पञ्चाशरस्वरे[5] स्त्री तु शाङ्खिनी स्थावरान्तरे ॥ १३३५ ॥
चौरपुष्पसमाख्येऽथ शङ्खी शङ्खवति त्रिषु ।
श्यामो ना हरिते वर्णे वर्णं कृष्णे तथा(र्बु?म्बु)दे ॥ १३३६ ॥

---

१. 'त्रि' ख. ङ. पाठः. २. 'तुप' ग. पाठः. ३. 'र्धा' क. ४. 'प्या' ङ. पाठः. ५. 'स्वरे' ख. ङ, 'स्वरो' क. घ. पाठः.

पीलुद्रुमे च श्यामा तु निशीथिन्यां स्त्रियामियम् ।
पिप्पलीफलिनीविद्युत्पालिनीशारिवासु च ॥ १३३७ ॥
स्त्रीव्यञ्जनकृतायां च कन्यायां विहगान्तरे ।
पोतकीसंज्ञकेऽथ क्ली मरीचे व्योम्नि च त्रि तु ॥ १३३८ ॥
उक्तवर्णवतोः श्यावः पुनर्ना सवितुर्हये ।
वर्णे च कपिशे त्रिस्तु तद्वति त्रिस्तु शान्तवाक् ॥ १३३९ ॥
शमिते शान्तियुक्ते च ना तु स्यात् सुनिषण्णके ।
नाट्यस्थरसभेदे च क्ली तु *शान्ताथ सास्त्रियाम् ॥ १३४० ॥
शाको हरितके पत्रपुष्पादिदशके तरोः ।
मूलपत्रकरीराग्रफलकाण्डाधिरूढकम् ॥ १३४१ ॥
त्वक् पुष्पं कवकं चेति शाकं दशविधं स्मृतम् ।
इत्युक्ते वृक्षभेदे तु ना पृथुच्छदसंज्ञके ॥ १३४२ ॥
अजयो द्वीपभेदेऽपि अवीत्यस्य ह्यनन्तरे† ।
शकटे च पुमांस्त्री तु शाकी शाके महत्यसौ ॥ १३४३ ॥
नानाजातीयशाकानां समाहार इतीतरे ।
शाणस्तु निकषे पुंसि स्यादुन्मानान्तरे तथा ॥ १३४४ ॥
चतुष्टये स मापाणां दाने शाणी तु सा स्त्रियाम् ।
गोणीसमाख्यावपने त्रि तु स्याच्छणयोगिनि ॥ १३४५ ॥
शादस्तु शष्पे पङ्के च शदने[2] स्वर्णबन्धयोः ।
ना त्रिस्तु[3] शरारि शदसम्बन्धिनि च सा पुनः ॥ १३४६ ॥
गृह्यकारस्यै शौदामिरित्युक्तेश्चिन्त्यतां गतिः ।
शाला तु गेहे गेहैकदेशे तु स्त्री तरोस्तथा ॥ १३४७ ॥

---

१. 'स्यात्' ग. पाठः. २. 'दशने' क. ग. घ. ङ. पाठः. ३. 'स्तु' ग. पाठः. ४. 'दाक्षाभि' क. ग. घ. पाठः. ५. 'के चि' क. घ. पाठः.

---

* 'शान्तावथास्त्रियाम्' इत्येव पाठ्यं भाति । † आनन्तर्यं च स्कन्दपुराणे कौमारिकाखण्डे ३७, तमाध्याये १६. १७. श्लोकयोरुक्तमनुसन्धेयम् ।

स्कन्धसञ्जातशाखायां सूक्ष्मैलायां च ना पुनः ।
पत्तूरे गमने त्रिस्तु गन्तरि श्यालवाक् तु ना ॥ १३४८ ॥
आशुगत्यां द्वयोस्तु स्याच्छुनि शाखा पुनः स्त्रियाम् ।
तरोर्लतायां देहस्य पादे बाहौ तथाङ्गुलौ ॥ १३४९ ॥
वेदव्यक्तिषु चाथो ना स्कन्ददेवस्य पृष्ठजे ।
देवभेदे नृस्त्रियोस्तु व्याप्तौ श्राद्धं पुनर्नपि ॥ १३५० ॥
पितॄणां भोजनायां स्यात् तत्तु श्रद्धावति त्रिषु ।
तत्रापि स्त्र्यर्थवृत्तित्वे श्राद्धा श्राणा त्विय स्त्रियाम् ॥ १३५१ ॥
यवाग्वां त्रि तु पक्वे स्यात् क्षीराद्य हविषस्तथा ।
अन्यत्र क्ली तु पाकेऽथो शार्ङ्गं क्ली सामसु क्वचित् ॥ १३५२ ॥
द्वे तु पक्ष्यन्तरे शार्ङ्गं पुनर्धनुषि शार्ङ्गिणः ।
अजयः शृङ्गविहितचापेऽप्याह विशेषत. ॥ १३५३ ॥
धनुर्मात्रे च नप् शृङ्गविकारे तु त्रिषु स्मृत ।
शृङ्गसम्बन्धिमात्रे चाप्यथाहतुर्वैदिकौ ॥ १३५४ ॥
शार्ङ्गः पक्षिविशेषे द्वे इति शारः पुन पुमान् ।
वायौ कर्बुरवर्णे च त्रि तु तद्वत्यथो नृनप् ॥ १३५५ ॥
द्यूतशारौ वराटेऽपि शारसाम्यनोचन ।
शारिः स्त्री शारिकासंज्ञविहङ्गे नृस्त्रियो पुन ॥ १३५६ ॥
पर्याणभेदे द्यूतस्य गुडे शारयर्ता तु ना ।
शालुः कषाये ना त्रिस्तु तद्वति द्वे तु दर्दुरे ॥ १३५७ ॥
शार्ङ्गी तु पुंसि गोविन्दे तथा शार्ङ्गवति त्रिषु ।
शिवः शम्भौ पद्मरागे गोरसे शीधुकील्योः ॥ १३५८ ॥
सुनिषण्णाख्यशाके च नाथ वातमृगे द्वयोः ।
अथो शिवा स्त्री पार्वत्यां शम्भोर्लिनतु शक्तिषु ॥ १३५९ ॥

---

१. 'स्तु' इ पाठ. २. 'न' क. ग प., 'न न' ख. पाठ'. ३. 'त्रियां ■ शा' ग. पाठ'.

एकशक्तौ गवीध्वाल्यक्षुद्रधान्ये नदीषु च ।
हरीतक्यामामलक्यां तामलक्यां शमीद्रुमे ॥ १३६० ॥
तुलस्यां क्रोष्टुभेदे च दीप्तजिह्वाह्वयेऽथ तत् ।
क्लीब वारिणि कल्याणे स्थौणेये मूलकान्तरे ॥ १३६१ ॥
चाणक्यमूलकाभिख्ये व्योम्नि त्रि तु शुभान्विते ।
शिला त्वश्मनि पेषण्यां द्वाराध स्थितदारुणि ॥ १३६२ ॥
मन शिलायां शैलेये धातौ माक्षिकसञ्ज्ञके ।
द्वारनासाविधारण्यां स्थूणाशीर्षे तु सा द्विधा ॥ १३६३ ॥
शिला शिली च वध्वा तु शिली गण्डूपदस्य च ।
एषु स्त्री क्ली तु धान्यानामार्जने सिलसञ्ज्ञके ॥ १३६४ ॥
शिखा तु स्त्री शिफाशाखाघृणिज्वालासु मूर्धनि ।
चूडायां केकिचूडायां चूचुकेऽप्यग्रमात्रके ॥ १३६५ ॥
अजयस्तु प्रधानेऽपि सज्जनोऽग्रेऽपि भूरुह ।
ना तु सर्पान्तरे सर्पसत्रयाजिफणाभृतां (?) ॥ १३६६ ॥
शिम्बो द्वे मृगजातौ स्याद् बीजकोश्यां तु सा स्त्रियाम् ।
शिम्बा मुद्गादिसस्यानामथोचे शाकटायन ॥ १३६७ ॥
शिम्बी[2] निष्पावबल्लीति शितं तु त्रिषु तेजिते ।
ना तु बाणे शितिस्तु स्त्री तेजने ना तु वर्णयो ॥ १३६८ ॥
शुक्ले कृष्णेऽप्यजौ वर्णद्वयैकवति तु त्रिषु ।
शितिर्द्वयोर्व्यालमृगे शृणातौ तु पुमानयम् ॥ १३६९ ॥
शिशुः पुस्यूषिभेदे च स्कन्दे च द्वे तु बालके ।
शिग्रुर्भोजनशाके स्त्री ना तु शोभाञ्जनद्रुमे ॥ १३७० ॥
श्लिकुर्न ना विषादे ना ज्योतिषेऽपि मृगास्थनि ।
शिखी नाग्न्यशुवृक्षेषु शरे केतुग्रहे द्विजे ॥ १३७१ ॥

---

१. 'ता ॥' क पाठ    २ 'म्बा' ग पाठ

परिव्राजि तथा वृक्षविशेषेऽश्मन्तकाह्वये ।
अथो शिखावति त्रि स्याद् द्वे कुक्कुटमयूरयो ॥ १३७२ ॥

शीलमस्त्री स्वभावेऽपि सद्वृत्तेऽप्यथ शीतवाक् ।
क्लीबं जले च शैत्ये च त्रिस्तु तद्वति ना पुन ॥ १३७३ ॥

श्लेष्मातके वेतसे च शीघ्रो ना मारुते त्रिषु ।
क्षिप्रे क्लीब त्वसत्त्वे चेत्याहुरेकेऽथ शीरवाक् ॥ १३७४ ॥

द्वयोरजगरे स्त्री तु शीरा कार्पासिकाह्वये ।
स्तम्बे लताङ्कुशे त्वेके शीरीत्याहुर्द्वयो पुन ॥ १३७५ ॥

शीर्णी न्यक्कौ कृमौ चाथ मद्ये शीधुर्नृशण्डयो ।
पक्वैरिक्षुरसै सिद्धमद्यभेदेऽपि मन्वते ॥ १३७६ ॥

श्रीमांस्तु पुंसि गोविन्दे कुबेरे गृहकेतुषु ।
इत्वराख्यबलीवर्दे कदम्बतिलकाख्ययो ॥ १३७७ ॥

वृक्षयोर्गुग्गुलो द्वे तु शुके लक्ष्मीवति त्रिषु ।
शीरा त्वजगरे द्वे स्यात् सर्पे इत्यपरे पुन ॥ १३७८ ॥

सृगाल इत्यथ शुभं क्ली जले मङ्गले तथा ।
लग्नाच्च नवमे राशौ मेढलिङ्गे त्वत परम् ॥ १३७९ ॥

मञ्जुप्रशस्तयोश्चापि मङ्गलेन समन्विते ।
अर्घ्यायां तु शुभा स्त्री स्याच्छुक्तस्त्वर्कसितत्वयो ॥ १३८० ॥

अध्वरे दक्षिणायामप्यग्नौ चन्द्रे च भार्गवे ।
ज्येष्ठमासे कलावंशे यज्ञपात्रगृहान्तरे ॥ १३८१ ॥

ना द्वे द्विजे शिशौ चाथ क्ली जने धनपुण्ययो ।
रेतस्यक्षिरुग्भेदे सामभेदे च काञ्चने ॥ १३८२ ॥

त्रि तु मेध्ये सिते चाथ धर्ममर्जनरश्मिषु ।
शतत्रये स्त्रिय शुभ्रा शुभ्रस्तु नरलिङ्गक ॥ १३८३ ॥

---

१ 'त्र' क ख पाठ २ नृ' ङ मृ' ख ग पाठ .

ज्योत्स्नापक्षे श्वेतवर्णे त्रि तु तद्वति नब् जले ।
शुक्रस्तु कीरे द्वे क्ली तु स्थौणेयाह्वयभेषजे ॥ १३८४ ॥

ना तु व्यासमुनेः पुत्रे रावणानुचरेऽप्यथ ।
शुक्तं क्ली काञ्जिके कल्कजाताविस्यपरे विदुः ॥ १३८५ ॥

यन्मस्त्वादि शुचौ भाण्डे सक्षौद्रगुडकाञ्जिके ।
त्रिरात्रं धान्यराशिस्थं तत्रापि त्रि तु पूतिताम् ॥ १३८६ ॥

आपन्ने परुषेऽम्ले च शुल्कं त्वस्त्री महीपतेः ।
मार्गादिषु प्रदेयेऽर्थे विवाहाय वराद् घने ॥ १३८७ ॥

भाष्ये शुष्मं तु नप् तोये संयोगबलयोरपि ।
कश्चित्तु पुंसि सवितर्यपि मारुतकालयोः ॥ १३८८ ॥

शुङ्गा त्रयी पल्लवस्य कोश्यां वृक्षस्य ना पुनः ।
ऋषिभेदेऽमुना मोक्तमधीते वेत्ति वापि यः ॥ १३८९ ॥

तत्राथ क्ली श्रुतं शास्त्रे श्रवणाख्ये च कर्मणि ।
त्रिषु स्याकर्णितेऽस्मात्तु वैजयन्त्यां पृथग् जगौ ॥ १३९० ॥

आकर्णितादवधृते क्लीबं शुद्धस्तु ना रवौ ।
त्रि तु पूते केवले च क्ली तु शुद्धौ जले त्रि तु ॥ १३९१ ॥

शुभ्रं दीप्तिमति स्याच शुक्रे शौक्ल्ये तु पुंस्ययम् ।
शुण्ठो ना तृणभेदे स्यात् पशौ पेश्यां च स त्रि तु ॥ १३९२ ॥

अल्पे स्त्रीपुंसयोस्तु स्याच्छोषणे शुष्णवाक् तु ना ।
अर्के कश्चित्तु रश्मौ च ब्रूते कुक्षिनिदाघयोः ॥ १३९३ ॥

बले तु क्ली शुनस्तु द्वे शुनि वायो तु ना नपि ।
सुखेऽथ शुचिरीशाने सूर्ये चन्द्रेऽग्निगौत्रल्ययोः ॥ १३९४ ॥

उपधाशुद्धसचिवे भौष्मे चाषाढमासि च ।
त्रि तु शुद्धेऽनुपहते शुक्रे शुक्तिः पुनः स्त्रियाम् ॥ १३९५ ॥

मुक्तास्फोटेऽङ्कोलदलसज्ञभेषजवस्तुनि ।
तिन्त्रिड्यां तिन्त्रिडीकाया फले दुर्नामिकाह्वये ॥ १३९६ ॥
जलजन्तौ च घोटाना रोमावर्तान्तरेऽपि च ।
सज्जनस्त्वपठीदेनामुन्माने कर्षसज्ञके ॥ १३९७ ॥
वैजयन्त्या तु कर्षाख्यमानस्य द्विगुणेऽपठीत् ।
अक्षिरोगविशेषे च पुमास्त्वप्यन्तरे स्मृत ॥ १३९८ ॥
सखाय आनिषीदेति पञ्चवर्गस्य दर्शके ।
शुभिस्तु नाके यतिनि स्यादपाविति कश्चन ॥ १३९९ ॥
द्वे तु विप्रे सुन्दरे तु ऽथ स्त्री शोषणे शुषिः ।
रन्ध्रे च ना तु धातौ स्याच्छुष्यतौ शुण्ठिवाक् तु ना ॥ १४०० ॥
धातौ स्याच्छुण्ठतौ स्त्री तु नागरे शुन्ध्युवाक् तु ना ।
सूर्येऽप्यायहनीत्यन्य शकुनौ तु द्वयोरथ ॥ १४०१ ॥
शुन्ध्यवोऽप्सु स्त्रिय शूरः पुनर्वीरे त्रिषु द्वयो ।
कुक्कुटे श्वेतशाले तु पुमान् शूलं तु न स्त्रियाम् ॥ १४०२ ॥
रुग्भेदे शस्त्रभेदे च शूद्रवाक् तु द्वयोरियम् ।
तुर्यवर्णे सङ्करजेऽप्येतयो पुनरर्थयो ॥ १४०३ ॥
स्त्र्यर्थे शूद्राथ पुयोगे शूद्री स्त्री भृम्नि तु स्मृता ।
धर्मोत्सर्गार्थिरश्मीना त्रिशत्या प्रथमे शते ॥ १४०४ ॥
शद्रा स्त्री रश्मिषु क्री तु रजते शूकवाक् पुन ।
अस्त्री धान्यस्य सूक्ष्माग्रे शुकानुक्रोशयोरथ ॥ १४०५ ॥
परिमाणान्तरे शूर्पमस्त्री द्रोणद्वयात्मके ।
सज्जन पुनराहैनमर्धप्रस्थे तथैव स ॥ १४०६ ॥
द्रोणाख्यपरिमाणस्य माने प्राह चतुर्गुणे ।
प्रस्फोटनक्रियाया च साधने शूर्पवाक् तु नप् ॥ १४०७ ॥

१ 'ण्या' ग पाठ २ ण्ड ग पाठ

बले सुखे च शूपा तु शाकभेदे स्त्रियामियम्।
वैजयन्त्यां कासमर्दे साह शूली तु शङ्करे ॥ १४०८ ॥
पुंसि शूलवति त्वेष त्रिषु शृङ्गस्तु न स्त्रियाम्।
विषाणे शैलशिखरे वररुच्यादयः पुनः ॥ १४०९ ॥
सानौ क्रीडाम्बुयन्त्रे च प्रधानेऽन्यस्तु मन्यते।
प्राधान्येऽन्यः प्रभुत्वेऽथ जीवकाह्वयभेषजे ॥ १४१० ॥
ना क्ली तु ज्वलिनि स्त्री तु शृङ्गी स्याद् भेषजान्तरे।
यस्य कर्कटशृङ्गीति संज्ञा यस्याह्वयो विषा ॥ १४११ ॥
तत्रापि भेषजे मत्स्यविशेषेऽन्ये त्वमुत्सत।
मद्गुराख्यस्य मत्स्यस्य प्रियायामित्यथो शृधूः ॥ १४१२ ॥
गुदे स्त्री कृमिजातौ च ना तु स्याद् दानवान्तरे।
ख्याते बलिरिति स्यात्तु शृङ्गी ना वृषभाह्वये ॥ १४१३ ॥
भेषजे वृषभेऽश्वे च यस्य शृङ्गपदे भवेत्।
मांसबुद्बुद उक्ता तु शृङ्गिणी सुरभौ स्त्रियाम् ॥ १४१४ ॥
महिषे तु द्वयोः शृङ्गवति तु त्रिः पुमान् पुनः।
शेषोऽप्रधानेऽनन्ताख्यसर्पराजेऽथ शार्ङ्गिणः ॥ १४१५ ॥
अवतारान्तरेऽपत्ये त्रिस्त्वन्यत्रोपयुक्ततः।
माल्याक्षतादिदाने तु स्त्री शेषा शेववाक् तु नप् ॥ १४१६ ॥
सुखे धने च शेवा तु निद्राभेदे स्त्रियामियम्।
प्रचलासंज्ञके श्वेतस्त्वृषिभेदे नृलिङ्गकः ॥ १४१७ ॥
कुलशैलान्तरे मेरोरुत्तराज्ञीलपर्वतात्।
उत्तरे शुक्लवर्णे च स्यादथो त्रिषु तद्वति ॥ १४१८ ॥
क्लीबं तु दधि रजतेऽप्यथ श्वेता सुरान्तरे।
पैष्टिकीसंज्ञके स्त्री स्यान्नदीभेदे लतान्तरे ॥ १४१९ ॥
निरूपितः श्वेतशब्दः श्येतस्तु श्वेतवर्णके।
पुमांस्तद्वति तु त्रि स्यात् तत्रापि स्त्र्यर्थता यदा ॥ १४२० ॥

तदा श्येता तथा श्येनी मृगे द्वे त्वपि पक्षिणि ।
श्येनसंज्ञतृणप्राणिजात्योः स्यादेतयोर्यदा ॥ १४२१ ॥

स्त्र्यर्थे वृत्तिस्तदा रूप श्येतीत्येवाथ पुंस्ययम् ।
श्येनः सामान्तरेषु स्यात् क्रतुभेदे जिघांसतः ॥ १४२२ ॥

द्वे त्वश्वे पत्रिसञ्ज्ञे च पक्षिभेदे स्त्रियां पुन ।
श्येना स्यात् माचिकासञ्ज्ञपक्षिजातावथ द्वयोः ॥ १४२३ ॥

शकुनावप्यजगरे श्येत्यः श्रेष्ठः पुनस्त्रिषु ।
स्यात् प्रशस्यतमे क्ली तु ताम्रे श्रेणिस्तु नृस्त्रियोः ॥ १४२४ ॥

समानजातीयाना स्याच्छिल्पिना सहतावथ ।
व्याचष्टेऽष्टादशगणविशेष इति शब्दवित् ॥ १४२५ ॥

हर्षनन्दी तथा पङ्क्तौ धारायामपि नपू पुनः ।
श्रेयः सामविशेषे स्याद् होर्ग्येमानुकोद्भवे ॥ १४२६ ॥

तथा मोक्षे च धर्मे च मङ्गले त्रि तु तद्वति ।
स्यात् प्रशस्यतरे चाथ स्त्र्यर्थे वृत्तिर्यदा तदा ॥ १४२७ ॥

एतयोरर्थयो रूप श्रेयसीति स्त्रिया पुनः ।
श्रेयसी हस्तिपिप्पल्या स्यात् पथ्यापाठयोरपि ॥ १४२८ ॥

शैलस्तु भूधरे पुंसि शिलासम्बन्धिनि त्रिषु ।
वृत्तौ शैलभनाया स्त्री शैलीत्येव प्रचक्षते ॥ १४२९ ॥

शैरवः पुनर्द्वयोर्मर्त्यजातिभेदे यदुद्भवः ।
अनन्यपूर्वब्राह्मण्या विप्रव्रात्यात् प्रकीर्तित ॥ १४३० ॥

शिरासम्बन्धिनि पुनस्त्रिरथो शोणवाड् नरि ।
हिरण्यबाहुसञ्ज्ञे स्यात्तद्भेदेऽपि पादपे ॥ १४३१ ॥

टुंण्डुसञ्ज्ञे रक्तवर्णे त्रि तु तद्वति तत्र च ।
स्त्र्यर्थे शोणी च शोणा च घोटभेदे तु स द्वयोः ॥ १४३२ ॥

---

१ 'टु' इ पाठ

उकः कोकनदच्छाये शोकस्तु शुचि ना स्त्रियाम् ।
शोकी रात्रावथो शौण्डः शुण्डासम्बन्धिनि त्रिषु ॥ १४३३ ॥
मत्ते च कुक्कुटे च द्वे शौण्डी तु जलदावलौ ।
पिप्पल्या च स्त्रिया षट्कः पुन षण्णा गणे त्रिषु ॥ १४३४ ॥
विशेषात् काममदयोर्लोभहर्षरुषामपि ।
मानस्य चेत्यमीषा ना षण्णा सङ्ख्येऽथ षड्ध्वने ॥ १४३५ ॥
सम्भवस्तु समासेषु कशब्देन कृतेष्वद' ।
तत्तत्समासप्राप्त स्याल्लिङ्गमित्यवधार्यताम् ॥ १४३६ ॥
षष्ठं तु पूरणे षण्णा त्रि षष्ठी तु स्त्रिया तिथौ ।
स्कान्धा षष्ठविभक्तौ च पार्वत्या चाथ षण्डवाक् ॥ १४३७ ॥
अस्त्री वृक्षसमूहे स्यात् पद्मादीनामितीतरे ।
शाश्वतस्तु गवा पत्यौ पुस्याह ध्रुवमवाक् पुन ॥ १४३८ ॥
कैश्चिद्देवेष्यते नान्यैर्लिङ्ग तस्य पुमान् मतं ।
चन्द्रे रश्मौ तथा तन्तौ मङ्गले चाथ नब् जले ॥ १४३९ ॥
सत्त्वं स्वभावे सत्ताया द्रव्येऽन्त करणे वले ।
पराक्रमे साङ्ख्यगुणे व्यवसायात्मभावयो ॥ १४४० ॥
माहात्म्ये पौरुषे त्वस्त्री पिशाचादौ च जन्तुषु ।
प्राणे चाथ समं तुल्ये साधौ च त्रिषु स त्वयम् ॥ १४४१ ॥
सर्वशब्दस्य पर्याय सर्वनामसु सा त्वियम् ।
स्त्री समा वत्सरे केचित् स्त्रीभूम्नयर्थेऽत्र मन्वते ॥ १४४२ ॥
सभा सभ्येषु सङ्घाते द्यूते सदसि मन्दिरे ।
स्त्री त्रिस्तु तत्र यद् वस्तु व्योमाद्य भेन सयुतम् ॥ १४४३ ॥
सहा तु पुष्पस्तम्बेषु त्रिषु स्त्री तरणे तथा ।
नीलझिण्ट्या पीतझिण्ट्यामित्यप्यतिबलाह्वये ॥ १४४४ ॥

---

१ 'तम्' इ पाठ

---

§ तरणिश्चौषधिभेद' ।

बलासंज्ञे च भैषज्यस्तम्बयोरोपधावपि ।
मुद्गपर्ण्यभिधानायां मेयलिङ्गं तु सोढरि ॥ १४४५ ॥

सङ्ख्यमस्त्री रणे स्त्री तु सङ्ख्या स्याद् गणने तथा ।
एकत्वादौ विचारे च सव्यं तु त्रिषु दक्षिणे ॥ १४४६ ॥

शरीरभागे वामे च सोतव्यसवितव्ययो॰ ।
तथा प्रेरयितव्ये च मृतके त्वनले पुमान् ॥ १४४७ ॥

सभ्यस् त्रिः सभासाधौ तथा सामाजिकेऽपि च ।
सज्जनेऽप्यथ यागस्थे पूर्वेऽप्याहवनीयतः ॥ १४४८ ॥

अग्निभेदे पुमान् सह्यः पुनर्ना पर्वतान्तरे ।
पश्चिमार्णवपार्श्वस्थे सोढव्ये तु त्रि नप् पुनः ॥ १४४९ ॥

आरोग्ये क्ली तु सत्यं स्याच्छपथे तथ्य एव च ।
त्रि तु तद्वति सत्या तु सत्यभामाह्वये स्त्रियाम् ॥ १४५० ॥

पत्न्यन्तरे केशवस्य स्पशस्तु नरि सयुगे ।
चारेऽथ यजमानस्य पत्न्या सन्नहने स्पशा ॥ १४५१ ॥

योक्रेण स्त्र्यथ ना स्पर्शो उपतापप्रदानयोः ।
स्पर्शने कादिवर्णेषु मावसानेषु सज्जन ॥ १४५२ ॥

पुनर्जारेऽवदद् द्वे तु स प्वाभूत किङ्करे ।
त्रि तु स्प्रष्टरि सिंहस्तु पठति स्नोपलसरि ॥ १४५३ ॥

स्वरः षड्जाद्युदात्तायोरज्वर्णे कण्ठजध्वने ।
अरे च शोभने पुंसि त्रि तु स्याच्छोभनारके ॥ १४५४ ॥

अतिशोभिऽप्यथो सामस्वेयज्जादिषु षट्सु नप् ।
स्वन्नं पुनर्नदुग्धी सुजग्धे रचिते त्रिषु ॥ १४५५ ॥

शोभनत्वादिसयुक्ते स्वन्ने तत् स्यान्नपुंसकम् ।
स्वर्णं तु हेम्नि क्ली रक्तनालिकेरे तु पुम्यपम् ॥ १४५६ ॥

स्वक्षस्तु त्रिषु यस्याक्षशब्दार्थः शोभनोऽक्षि वा ।
तत्र तत्रापि च स्त्र्यर्थे स्वक्षा पूर्वे परत्र तु ॥ १४५७ ॥

स्वक्षी स्याच्छोभने त्वक्षे परवल्लिङ्गतां स्मरेत् ।
स्वजस्तु शोभने छागे द्वयोरौरसपुत्रयोः ॥ १४५८ ॥

प्राणिजात्यन्तरे त्रिस्तु स्वशब्दार्थसमुद्भवे ।
प्रशस्ताजार्थयुक्ते च प्रशस्ते स्वजवस्तुनि ॥ १४५९ ॥

परवल्लिङ्गतां विद्यादथ स्तनभवे त्रिषु ।
स्तन्यं क्षीरे तु तत् क्लीबं सरस्तु नरि मारुते ॥ १४६० ॥

क्षीरे तु क्ली द्वयोस्त्वेष निषादशनकीलिते ।
मर्त्यजात्यन्तरे त्रिस्तु स्थिरस्य प्रतियोगिनि ॥ १४६१ ॥

सलस्तु देवदेवस्य भृत्ये भृङ्गिरिटाह्वये ।
पुमान् पत्राङ्गशब्देन प्रसिद्धे तु नपुंसकम् ॥ १४६२ ॥

भेषजेऽथ सटा च स्त्री जटायां व्रतिनामथ ।
सिंहस्य केसरे नै(पृ)स्त्री* मर्त्यजात्यन्तरे पुनः ॥ १४६३ ॥

द्वे भटीविप्रजेऽथ स्युर्नावृद्देदे(ऽथ ? नृ)भूमनि ।
सल्वाः सल्वा पुनः स्त्रीत्वे क्षत्रियाभेद ईरिता ॥ १४६४ ॥

सङ्गो ना सङ्गमे युद्धे लवणे तु नपुंसकम् ।
सैन्धवाख्येऽथ नपुंस्त्रीत्वे स्थली स्थलमिति द्वयम् ॥ १४६५ ॥

विद्यादुन्नतभूभागे टावन्ता तु स्थला त्रियाम् ।
क्षेत्रादिनिम्नभूमिष्ठसलिलस्य निवारणे ॥ १४६६ ॥

कृत्रिमे मृन्मये सत्रं त्वनुदात्तनिर्माणयोः ।
अल्पे चाप्यवसन्ने च भेद्यलिङ्गं समामनन् ॥ १४६७ ॥

---

१. 'नृ' क. ग. घ. ङ. पाठः. २. 'न्नाः' ख. पाठः. ३ 'स्या' ख. पाठः.

---

* 'सटा जटाकेसरयोः' इति मेदिनी ।

गते च वृद्धा सचौ तु क्ली सखा तु त्रिषु स्मृत ।
सहायसुहृदो स्त्र्यर्थे यदा वृत्तिस्तदा सखी ॥ १४६८ ॥

इति भाषाप्रयोगे स्याद् रूप बन्धौ तु केचन ।
पुमानिति प्रब्रुवते सनिस्तु पथियाच्ञयो. ॥ १४६९ ॥

दाने नदीतटे नृस्त्री द्वे तु म्लेच्छे पुमान् पुन ।
सनतौ च सनोतौ च धात्वो स्त्री तु स्थविः (फ[?]च)ले ॥ १४७० ॥

कुष्ठी([?])मासे द्वयोस्तु स्यात् तुन्नवाये त्रि कुष्ठिनि ।
स्तरिर्धूमे पुमान् स्त्री तु तृणे सर्जूः पुन स्त्रियाम् ॥ १४७१ ॥

वनस्पतौ विद्युति च काश्चिद् वणिजि तु द्वयो ।
स्रष्टा तु सृष्टिकृन्मात्रे त्रिर्ना हरिविरिञ्चयो ॥ १४७२ ॥

सम्राड् तु पुंसि विष्ण्वर्कहुताशेन्द्रेषु राज्ञि तु ।
येनेष्ट राजसूयेन मण्डलस्येश्वरश्च य ॥ १४७३ ॥

शास्ति यश्चाज्ञया राज्ञस्तत्र स्यादथ सा स्त्रियाम् ।
षड्विंशत्यक्षरेऽन्त स्याच्छन्दोभेदे स्वराड् पुन ॥ १४७४ ॥

चतुस्त्रिंशत्स्वरेऽन्त स्याच्छन्दोभेदे स्त्रिया पुमान् ।
विष्णावैश्वर्यवद्भेदे स्वस्य राजि[1] च ना पुन ॥ १४७५ ॥

स(र[?]रा)ः सान्तधान्तमन्ये वायो मेघे द्रुमान्तरे ।
सरीसृपपतत्र्योस्तु द्वे संश्वत् तु नृलिङ्गक ॥ १४७६ ॥

अध्वर्यौ कुट्के तु त्रि स्रवत् तु स्रावके त्रिषु ।
स्रवन्ती तु स्त्रिया नद्या स्रग्ना पुनरसा त्रिषु ॥ १४७७ ॥

मालाकारे परस्त्वाह मत्स्यघाते पुमान् पुन ।
पदसङ्घात इत्येक सत्री पुनरसौ पुमान् ॥ १४७८ ॥

---

१ 'ज्ञि' ग पा० २ 'श्र' ग पाठ

सञ्चारचारभेदे स्याच्छद्मना यस्य वर्तनम् ।
भेद्यलिङ्गस्तु विपिनयज्ञभेदादिमत्ययम् ॥ १४७९ ॥
सदो यज्ञमहावेदेर्हविर्धानद्वयस्य यः ।
पश्चाद्देशस्तत्र शण्डो गोष्ठ्यां तु स्त्रीनपुंसकम् ॥ १४८० ॥
द्यावापृथिव्योस्तु क्लीबे द्वित्ववत् सदसी इति ।
सरस्तु सलिले क्लीबं तटाके तु नपि स्त्रियाम् ॥ १४८१ ॥
तत्रापि स्त्र्यर्थवृत्तित्वे सरसीति स्त्रियां पुनः ।
महासरस्तु सरसीं दाक्षिणात्याः प्रयुञ्जते ॥ १४८२ ॥
सहो जले बले च स्त्री हेमन्ते तु पुमानयम् ।
मार्गशीर्षे तु मासि स्यात् पुन्नपुंसकयोरयम् ॥ १४८३ ॥
साधिस्तु नपि संयोगे ना त्वग्नावनडुह्यपि ।
साहिष्णौ त्रिषु सारस्तु तरोर्मज्ज्ञि घने बले ॥ १४८४ ॥
स्थिराङ्के* रेतसि व्योम्नि सरणे च नरि त्रि तु ।
सुन्दरोत्कृष्टयोर्दत्तस्तूत्कृष्टे नरमभ्यधात् ॥ १४८५ ॥
न्याय्ये तु सिंहाद्रिरिति दत्तस्तु क्लीति सा पुनः ।
सारी स्त्री भ्रुकुटी सालः पुनर्नान्ये तु नप्यपि ॥ १४८६ ॥
प्राकारे ना तु विटपिमात्रे वृक्षान्तरे तथा ।
अश्वकर्णाह्वये गल्यां मत्स्यभेदे तु स द्वयोः ॥ १४८७ ॥
स्थालं भोजनपात्रे स्त्री स्यादुखायां तु सा स्त्रियाम् ।
स्थाली ना तु महादेवे स्थितिकर्मणि चाप्यथ ॥ १४८८ ॥
स्थानं क्लीबं नरेऽप्यन्ये प्राहुर्गेहावकाशयोः ।
सम्बन्धभेदे जन्तूनां स्याज्जिनृचिप्रसङ्गयोः ॥ १४८९ ॥
अपकर्षे च सादृश्ये क्लीबं तु स्थितिकर्मणि ।
एकारान्तं पुनः केचित् स्थाने इत्यव्ययं विदुः ॥ १४९० ॥

१. 'लं' क. ख. पाठः. २. 'जन्तूना' क., 'बन्धूना' ग. पाठः. ३. 'भ' ग. पाठः.

* 'स्थिरांशे' इति स्यात् ।

पतिव्रतायां तु स्त्री स्यात् साध्वी स्वादुस्तु पुम्ययम् ।
मधुराख्यरसे त्रिस्तु तद्युक्ते प्रियमृष्टयो ॥ १९०३ ॥
मनोज्ञे च जले तु क्ली द्राक्षायां तु प्रियाप्रियम् ।
स्वाद्वी क्वचि तु पठित शाकटायनसूरिणा ॥ १९०४ ॥
लिङ्गानुशासने तस्य चिन्त्योऽर्थः स्याद् विचक्षणै. ।
सात्मा ना प्रकृतावात्ममहिते तु त्रिषु स्मृत ॥ १९०५ ॥
अत्यन्ताभ्यस्तताहेतोः प्रकृतिस्थ गते परे ।
ऊर्णाया तु कदल्यादे स्नावः स्नायुनि चाथ नप् ॥ १९०६ ॥
शाकटायन आह स्म हर्षनन्दी च पुम्यमुम् ।
स्वामी तु स्कन्ददेवे ना त्रि तु नाथे स्त्रिया पुन ॥ १९०७ ॥
स्वामिन्यनूपवशोत्थराजपत्न्या तथा पुन ।
नाट्योक्तिराजपत्न्या च जीरयोगगसोम्तु ना ॥ १९०८ ॥
सितः शौक्ल्ये च तद्युक्ते पुनाक्लिबद्ध एव च ।
मानावसाने च क्ली तु शर्करायां सिता स्मृता ॥ १९०९ ॥
स्थिरं त्रिर्निश्चले ना तु शनौ स्त्री तु स्थिरा भुवि ।
सालपर्ण्यामथैषज्येऽप्यथ स्थित इति त्रिषु ॥ १९१० ॥
समतिजे निवृत्ते च गतेः स्यादूर्ध्वता गते ।
स्थितो तु क्ली मृगेन्द्रे तु सिंहो द्वे स्त्री तु सिंहसो ॥ १९११ ॥
वार्ताकीकण्टकार्योश्च वाशाया च पुमान् पुन ।
मेरुदारयगिरौ स्निग्धः पुन स्याद् मेरुलिङ्गक. ॥ १९१२ ॥
वयस्येऽपि ससौहार्दे क्ष्लमेटनकर्मणि ।
पुमान्तु गुग्गुलौ मन्त्रिजने (तु[1])[1] छेदने तु नप् ॥ १९१३ ॥
स्मितं तु त्रिषु फुल्ले[2] स्यान् स्मितवचसि नप् पुन ।
अदृष्टदशने हासे विमाने कुसुमस्य च ॥ १९१४ ॥

---

१ 'र' क ख पाठ. २ 'पुरे हस' ग. पाठ

---

† चेति स्यात् ।

सिद्धस्तु सनकादौ ना देवजात्यन्तरे द्वयोः ।
निष्पन्ने तु त्रिषु स्त्री तु सिद्धौ गत्यादिकेष्वपि ॥ १९१५ ॥

सिद्धो ना वृक्षभेदे स्यादथ साधुजने त्रिषु ।
*सिंहस्तु द्वे किशोरे स्यात् पुमानेष वनस्पतौ ॥ १९१६ ॥

मधूच्छिष्टे तु सिक्थोऽस्त्री पुलाकेऽन्नस्य पुंस्ययम् ।
सिनमन्ने शरीरे च स्त्री बिल्वाख्यद्रुमे तु ना ॥ १९१७ ॥

सिमोऽनुदात्त सर्वार्थे सर्वनाम त्रिषु स्मृतः ।
ग्रामगोचरभूमौ तु पुमान् नो सर्वनाम स ॥ १९१८ ॥

क्षेत्रस्य मर्यादाया च द्वयोस्तु स्यात् तुरङ्गमे ।
सिमा स्त्रियो महानाम्नीसञ्ज्ञसामान्तरे तथा ॥ १९१९ ॥

स्फिग्गुर्दे ना स्त्री स्वेषा शरीरावयवान्तरे ।
सिन्धुस्तु नद्या स्त्री ना तु समुद्रेऽपि नदान्तरे ॥ १९२० ॥

-रशीत्यक्षरच्छन्दोभेदे च कृतसञ्ज्ञके ।
गजाना दानतोये च कटनेत्रसमुद्भवे ॥ १९२१ ॥

नीरद्भेदे तु पुंस्यस्मिन् सिन्धरो द्वे तु कुञ्जरे ।
स्त्री तु सैन्धवसञ्ज्ञे स्याल्लवणे सीमवान् तु ना ॥ १९२२ ॥

क्षेत्रस्य मर्यादाया च ग्रामगोचरभुव्यपि ।
अश्वे तु द्वे पुमान् सीर आदित्ये लाङ्गलेऽपि च ॥ १९२३ ॥

हलाङ्कुरे तु सीरी स्त्री लाङ्गलिक्या च कश्चन ।
नद्या तु सीरा सीत्यं तु धान्ये स्त्री भेद्यवत् पुनः ॥ १९२४ ॥

सीतायामपि साधौ स्यात् हृष्टभूमितलेऽपि च ।
अथ मन्यार्पने †सीतिः स्त्री नभ पयसो (सके[१]) ॥ १९२५ ॥

---

१ 'चन्द्र' च ख घ. पा.

---

* 'सिंच घल्ला हलुनी वच' (उ ५ १२) इति स्तुवन्दिन । † 'स्तीर्वे.' इति स्यात् । अर्थेव कोशान्तरेषु नभ पयसोर्निमार्थेषु दर्शनात् ।

तनौ च शोणिते चाथ स्यादजे द्वे सुखं तु नप् ।
लग्नाद् राशौ चतुर्थेऽप्सु शस्तखे शर्मणि त्रि तु ॥ १९२६ ॥

तत्साधने शोभनखयुक्तेऽप्यथ सुखा स्त्रियाम् ।
शम्भोर्नवानां शक्तीनां शक्तावेकत्र ना पुनः ॥ १९२७ ॥

सुतः सोमरसे भूपे लग्नाद् राशौ च पञ्चमे ।
पुत्रयोस्तु द्वयोः स्त्री तु शाकवल्ल्यन्तरे सुता ॥ १९२८ ॥

उपोदकाख्ये त्रिषु तु प्रसूतेऽभिषुतेऽपि च ।
सुरस्तु देवे स्त्रीत्वे तु सुरा मद्ये जलेऽपि च ॥ १९२९ ॥

सुप्तं तु त्रिषु निद्राणे प्रशस्तजटकेऽपि च ।
खञ्जरीटे पुनः कृष्णवक्षसि द्वे स्त्रियां पुनः ॥ १९३० ॥

सुषा जटायां शस्तायां स्त्री तु स्वापे स्रुवा पुनः ।
सल्लक्यामपि मूर्वायां पुमांस्त्वाधारणाह्वये ॥ १९३१ ॥

यज्ञपात्रविशेषेऽथ स्थुलं दूष्ये नपुंसकम् ।
गुल्फे तु ना सुहृत् तु निर्मित्रे स्त्री शोभने हृदि ॥ १९३२ ॥

ना तु मन्त्रिण्यथ स्थूलं जडे बृहति पीवरे ।
(स्त्री तु ? त्रि स्त्री) दाम्नि त्रि तु स्थूरं पीवरेऽथ स्त्रियामियम् ॥ १९३३ ॥

पश्चाद्भागे च जङ्घायां गोधूमादितुषेषु च ।
स्थूराथ सूक्ष्ममत्यल्पे त्रिरध्यात्मे तु तन्नपि ॥ १९३४ ॥

शक्तौ त्वेकत्र शक्तीनां नवानां शार्ङ्गधन्वनः ।
सूक्ष्मा स्त्री ना तु सूर्यः स्याद् भास्करे र्चाचि तु स्त्रियाम् ॥ १९३५ ॥

सूर्या स्याद् गिरिकर्ण्यां च श्वेतायां स्यूतवाक् तु ना ।
प्रसवेऽथ त्रिरूते स्यात् सूतस्तु नरि सारथौ ॥ १९३६ ॥

पारदे द्वे तु तक्ष्णि स्याद् वन्दिन्यपि पठन्त्यमुम् ।
ब्राह्मण्यां क्षत्रियाज्जाते जनिते तु त्रिषु स्मृतः ॥ १९३७ ॥

---

१. 'चापि सु' क. ग. पाठः.

भवेत् सर्पिषि तैले वा ना तु चन्द्रे स्त्रियां पुनः ।
सृप्रा ह्युज्जयिनीपार्श्ववाहिन्यां सरिति स्मृता ॥ १५८९ ॥

सृकः पुंसि शरे वज्रे निरये द्वे पुनर्बके ।
सृगाले चाथ सृष्टं क्ली सर्जने त्रि तु निश्चिते ॥ १५९० ॥

बहुनिर्मितयोर्मुक्ते सृणिस्तु नरि पावके ।
अङ्कुशे तु स्त्रियामेव केचिदन्ये तु पुंस्यपि ॥ १५९१ ॥

सृपो तु द्वे शिशौ सर्पे यतिनि त्वेव मेघवत् ।
सृत्वा प्रजापतौ वह्नौ पुंसि द्वे नीचजातिषु ॥ १५९२ ॥

सृत्वरी तु स्त्रियां वीचि जननीवेश्ययोरपि ।
सेव्यं तु सेवनीये त्रिर्वातन्येऽप्यथ नब् जले ॥ १५९३ ॥

उशीरे निःशरे दध्नि पत्राङ्गाह्वयभेषजे ।
अब्धिजे लवणे ना तु मध्वासव इति श्रुते ॥ १५९४ ॥

मद्यभेदे स्त्रियां तु स्यात् सेव्या नीवारधान्यके ।
वन्दाकेऽन्यज्जटासंज्ञस्तम्बेऽथ चटके द्वयोः ॥ १५९५ ॥

स्थूलो तु सेवो ना न क्ली भजने त्रि तु सेनवान् ।
इनेन सहिते स्त्री तु सेना चम्वामथास्त्रियाम् ॥ १५९६ ॥

स्नेहस्तैलघृतादौ च प्रेम्णि चाह स्वतः पृथक् ।
सौहार्दे शाश्वतः क्ली तु वैजयन्ती समामनत् ॥ १५९७ ॥

जले स्थेयः पुनः सद्ये कैश्चिदुक्तोऽभिधेयवत् ।
विवादपदनिर्णेतर्यन्ये स्यातव्यके तु नप् ॥ १५९८ ॥

सेक्ता पुंसि धवे त्रिस्तु सेचके सैन्यवाक् तु नप् ।
सेनायां समवेते तु सेनायां त्रिः पुमान् पुनः ॥ १५९९ ॥

---

१. 'प्रा' घ ङ. पाठः. २. 'तं' ग. पाठः. ३. 'चापि च' ग. पाठः.

चतुर्ष्वेश्वेषु कृष्णस्य कश्चिदश्वेऽ नृभूम्नि तु ।
सैराः स्युर्मध्यदेशस्थनीवृद्भेदेऽथ स त्रिषु ॥ १९६० ॥

सीरस्य च सिरायाश्च सम्बन्धिन्यथ भेद्यवत् ।
स्वैरी स्वतन्त्रे वर्धक्या पुनः स्यात् स्वैरिणी स्त्रियाम् ॥ १९६१ ॥

सोमो ब्रह्मणि पूर्णेन्दौ वह्नौ पुण्ये लतान्तरे ।
याज्ञिकाना प्रसिद्धे ना सोमयागेषु चामृते ॥ १९६२ ॥

वीर्येऽमृतरसे स्याद् कान्त्य शैत्येऽथ तद्वति ।
त्रिपूमया च सहिते क्रमेण साहितेऽपि च ॥ १९६३ ॥

स्योनं तु क्ली सुखे त्रिस्तु साधने तस्य ना पुन ।
सूर्ये सूर्यस्य रश्मौ च समुद्रे तन्तुसन्ततौ ॥ १९६४ ॥

तन्तुवायस्य बिन्दौ तु स्तोको नाल्पे तु स त्रिषु ।
सोतः पुनर्जनयितर्यभिषोतरि च त्रिषु ॥ १९६५ ॥

उपाध्याये तु ना सौम्यः पुनस्त्रि सोमदेवते ।
सुन्दरे च पुमांस्त्वेष वत्सरे च बुधग्रहे ॥ १९६६ ॥

यूप सप्तदशारत्निर्वाजपेयस्य य श्रुत ।
तस्य पञ्चदशोऽरत्नौ सोमयागे च नप् पुन ॥ १९६७ ॥

तुरायणाख्यतपसोर्द्वये कृतयुगेऽपि च ।
स्त्रिया तु सा निशीथिन्या सौम्या स्यादित्यवादिषु ॥ १९६८ ॥

सौधोऽस्त्री सुधया शुभ्रीकृतगेहे नपि त्वद ।
रजते भेद्यलिङ्ग तु सुधासम्बन्धिनि स्मृतम् ॥ १९६९ ॥

हंसोऽर्कन्द्रो स्मरे विष्णौ वह्नौ निर्लोभभूभुजि ।
राजादिशब्दपूर्वस्तु श्रेष्ठे चेत्यजयोऽब्रवीत् ॥ १९७० ॥

भिक्षौ श्वेतवृषे पुंसि द्वयोस्तु स्यात् तुरङ्गमे ।
विहङ्गमविशेषे च श्वेतपक्षादिसङ्गके ॥ १९७१ ॥

---

‡ शैब्यसुग्रीवमेघपुष्पबलाहकाख्याश्चत्वारोऽश्वा प्रसिद्धा । शैब्याभिधा शैब्यधन्वस्थाने वा स्यात्, शैब्यायन्वतमस्यैव वा नामान्तर स्यादिति न ज्ञायते ।

अजयस्तु विशुद्धेऽपि तत्र न्यायात् त्रिषु स्मृतम् ।
हस्तः किष्कुप्रमाणे ना पाणौ भाजे च दन्तिनः ॥ १९७२ ॥

केशार्थात् तु परः केशसमूहेऽपि च दृश्यते ।
अपि सावित्रनक्षत्रे तद्युक्ते कालमात्रके ॥ १९७३ ॥

ह(तो तुः स्तस्त्रि) तत्र जानेऽथ पूर्वोक्तार्थेषु कश्चन ।
खण्डेऽप्येनं समाम्नासीद् हतं तु त्रिषु मारिते ॥ १९७४ ॥

गते गतवति क्ली तु गमने हननेऽपि च ।
स्त्री तु कुत्सितकन्यायां हता स्यादथ ना हतः ॥ १९७५ ॥

मार्गे कश्चित्तु तं प्राह विषण्णे त्रिर्हरस्तु ना ।
शर्वेऽग्नौ गर्दभे तु द्वे हन्तस्तु त्रिषु घातके ॥ १९७६ ॥

क्लीबं तु सन्निपातेऽपि चलाधानेऽथ ना ह्रदः ।
स्यादगाधजलाधारे द्वे तु मेषेऽथ मेघवत् ॥ १९७७ ॥

ह्रस्वोऽल्पे वामने चैकमात्रवर्णे यमे तु ना ।
हयस्तु ना धनूराशौ गतौ च तुरगे पुनः ॥ १९७८ ॥

द्वयोस्तत्रापि च स्त्र्यर्थे स्याद् ङीपन्ता हयी इति ।
हरिर्ना विष्णुसूर्येन्द्रचन्द्राग्नियमवायुषु ॥ १९७९ ॥

अंशौ शक्रहये शुद्धे रुक्मे रुक्माभवर्णके ।
श्वेते वररुचिर्वर्णे ब्रूते तु जयमङ्गलः ॥ १९८० ॥

हरिद्वर्णेऽपि कपिले त्रिषु त्वेष गुणैर्युते ।
एतैश्चतुर्भिर्द्वे त्वेष मर्त्यजात्यन्तरे भवेत् ॥ १९८१ ॥

गङ्गानिषादजे सिंहकपिभेकशुकाहिषु ।
अश्वेऽश्वभेदे हरितपीतवर्णे इतीदृशः ॥ १९८२ ॥

हरिशब्दः समुद्दिष्टो वाच्यानामेकविंशतौ ।
वैद्यास्तु केचिन्नारीणां भगेऽप्येनं समामनन् ॥ १९८३ ॥

न तत् प्रमाण्यतेऽस्माभिः स्वतस्तेषामनाश्रितः ।
हनुस्तु नृस्त्रियोर्गण्डस्योर्ध्वभागे द्वयोः पुनः ॥ १९८४ ॥

वैदेहशनकीजाते मर्त्यजात्यन्तरेऽथ ना ।
हरित् सूर्येऽपि सूर्याश्वे वर्णे च हरिते त्रि तु ॥ १९८५ ॥

तद्वति स्त्री तु दिङ्घ्योरङ्गुलौ चाथ तत् तृणे ।
शण्डमेके नरं त्वन्ये हस्ती द्वे च मतङ्गजे ॥ १९८६ ॥

पट्पदेऽथ स्त्र्यन्तरे स्त्री कामशास्त्रेषु विश्रुते ।
हस्तिनी हास्तिनपुरेऽप्यथ पुंसि हली भवेत् ॥ १९८७ ॥

बलभद्रे हलवति पुनस्त्रिर्हेलिनी पुनः ।
शक्रपुष्प्याह्वये स्तम्बे हसत् तु त्रिषु हासके ॥ १९८८ ॥

विकसत्यपि चाङ्गारशकट्यां तु स्त्रियामियम् ।
हसन्ती ना तु हरणे हारो मुक्तावलावपि ॥ १९८९ ॥

स्त्री तु देवनिवासस्य हारा कक्ष्यासु सा पुनः ।
हारी नामैव द्यूष्टायां कन्यायामथ स त्रिषु ॥ १९९० ॥

हरस्य च हरेश्चापि सम्बन्धिन्यथ हाल्यवाक् ।
हलसम्बन्धिनि त्रि स्यान्नालिङ्गस्तु विलेखने ॥ १९९१ ॥

स्त्री तु हाली कनिष्ठायां पत्न्याः स्वसरि सा पुनः ।
हाला सुरायामथ ना चन्दने तुहिने हिमम् ॥ १९९२ ॥

कर्पूरे तु पुमान् शीतगुणेऽपि त्रि तु तद्वति ।
हिमा तु स्त्री निशीथिन्यां मृडान्यां च हितं पुनः ॥ १९९३ ॥

त्रिः पथ्ये धारिते दत्ते हरीतक्यां तु सा हिता ।
स्त्री स्त्री तु धारणे दानेऽप्यथ हिंसाणि घातके ॥ १९९४ ॥

स्त्री तु हिंसा क्रोष्टुकोली लताभेदे च पण्डिताः ।
आहुर्गृध्रनखीमेके हिका तु स्त्री रुगान्तरे ॥ १९९५ ॥

पिङ्गलासंज्ञके हिक्कासंज्ञरोगान्तरेऽपि च ।
नृस्त्री तु हिक्कने त्रिस्तु हिक्कके हीनवाक् पुनः ॥ १५९६ ॥

त्रिरूनगर्ह्ययोर्ना तु नागकेसरपादपे ।
हीरः पुंसि शिवे द्वे तु सर्पे सिंहे च स त्रि तु ॥ १५९७ ॥

ह्रीको लज्जापरे द्वे तु नकुले ह्रीकवाक् पुनः ।
लज्जापरे लिङ्गिनि च नकुले तु द्वयोरयम् ॥ १५९८ ॥

ह्रीरुर्लज्जावति त्रि स्यात् कश्चित् स्वाह चक्रे द्वयोः ।
ह्रीकुर्लज्जावति त्रि स्याद् वनमार्जारके द्वयोः ॥ १५९९ ॥

हृद्यस्तु ना वशीकारमन्त्रे स्याद् वैदिके द्रुमे ।
कपित्थाख्ये तत्फले तु स्त्री दधन्यनुलेपने ॥ १६०० ॥

मधुमद्ये च माध्वीकसंज्ञे त्रिषु तु हृद्भवे ।
हृत्प्रिये हृद्धिते हृज्जे चारौ हृद्या तु सा स्त्रियाम् ॥ १६०१ ॥

मनःशिलायां छा(ख्या?ग्या)*मप्यृद्धिसंज्ञौषधान्तरे ।
हृष्टं तु हर्षे क्ली त्रिस्तु विस्मिते हर्षवत्यपि ॥ १६०२ ॥

तथा प्रतिहतेऽन्ये तु सरोमाञ्चेऽप्यधीयते ।
मनोहरे त्वप्यजयः स्यात् तथा स्तब्धरोमसु ॥ १६०३ ॥

आयुर्वेदप्रयोगस्तु स्तब्धे मेढ्रेऽप्यथो हृषिः ।
स्त्री दीप्तितुष्ट्योर्ना धात्वोर्हर्षेतौ हृष्यतावपि ॥ १६०४ ॥

अलीकवादिनि त्रि स्यात् स्त्री तु क्रुधि हृणिस्त्रि तु ।
ज्वलत्यथ हृपुस्तुष्टे त्रिष्वलीके तु पुंस्ययम् ॥ १६०५ ॥

हेलौ त्वनादरे नृस्त्री क्रुधि ना हेतिवाक् पुनः ।
रवेरर्चिषि वह्नेश्च ज्वाले स्त्री नृस्त्रियोः पुनः ॥ १६०६ ॥

---

१. 'हि' ग. पाठः. २. 'लि' ग. पाठः. ३. 'ढा' ख. क. पाठः.

---

* 'चुडन्या विभव्या हया पर्नादा परिहिन्यगा' (पृ. ७०, श्लो. ६३) इति वैजयन्ती

घस्रेऽथ हेमं क्ली तोये कनकेऽप्यथ पुंसि सः ।
हेमन्ते स्त्री तु होत्रा स्यात् वाचि यज्ञे तथर्त्विजि ॥ १९०७ ॥

होत्रं तु भवने क्लीब होत्वस्तु नरि वारिधौ ।
यजमाने द्वयोर्होता त्वृत्विग्भेदे पुमानयम् ॥ १९०८ ॥

द्वावके त्रिषु काण्डोऽयं त्र्यक्षराणामपूर्यत ॥ १९०८३ ॥

इति त्र्यक्षरकाण्डे नानालिङ्गाध्यायः ।

त्र्यक्षरकाण्ड समाप्तः ।

---

TRIVANDRUM SANSKRIT SERIES.

NO XXIX

# नानार्थार्णवसंक्षेपः

केशवस्वामिप्रणीतः ।

# THE NÂNÂRTHÂRṆAVASAMKSHEPA

OF

## KESAVASWÂMIN

EDITED

BY

T GANAPATI SÂSTRÎ

Curator of the Department for the publication of Sanskrit manuscripts

TRIVANDRUM

Part II—3rd Kanda

PUBLISHED UNDER THE AUTHORITY OF THE GOVERNMENT OF HIS HIGHNESS THE MAHARAJAH OF TRAVANCORE

TRIVANDRUM

PRINTED AT THE TRAVANCORE GOVERNMENT PRESS

1913

शल्येऽथ हेम क्ली तोये कनकेऽप्यथ पुंसि सः ।
हेमन्ते स्त्री तु होत्रा स्यात् वाचि यज्ञे तथर्त्विजि ॥ १६०७ ॥

होत्रं तु भवने क्लीब होत्वस्तु नरि वारिधौ ।
यजमाने द्वयोर्होता त्वृत्विग्भेदे पुमानयम् ॥ १६०८ ॥

हावके त्रिषु काण्डोऽयं द्व्यक्षराणामपूर्यत ॥ १६०८३ ॥

इति द्व्यक्षरकाण्डे नानालिङ्गाध्यायः ।

द्व्यक्षरकाण्डः समाप्तः ।

---

TRIVANDRUM SAÑSKRIT SERIES.

NO XXIX

# नानार्थार्णवसंक्षेपः

केशवस्वामिप्रणीतः ।

# THE NÂNÂRTHÂRṆAVASAMKSHEPA

OF

## KESAVASWÂMIN

EDITED

BY

T. GANAPATI SÂSTRÎ

*Curator of the Department for the publication of Sanskrit manuscripts*

TRIVANDRUM

**Part II—3rd Kanda.**

PUBLISHED UNDER THE AUTHORITY OF THE GOVERNMENT OF HIS HIGHNESS THE MAHARAJAH OF TRAVANCORE

TRIVANDRUM

PRINTED AT THE TRAVANCORE GOVERNMENT PRESS

1913

TRIVANDRUM SANSKRIT SERIES.

NO. XXIX.

# THE NÂNÂRTHÂRṆAVASAMKSHEPA

OF

## KESAVASWÂMIN

EDITED

BY

T. GAṆAPATI SÂSTRÎ

*Curator of the Department for the publication of Sanskrit manuscripts,*

TRIVANDRUM

Part II—3rd Kanda.

PUBLISHED UNDER THE AUTHORITY OF THE GOVERNMENT OF HIS HIGHNESS THE MAHARAJAH OF TRAVANCORE

TRIVANDRUM

PRINTED AT THE TRAVANCORE GOVERNMENT PRESS

1913

अनन्तशयनसंस्कृतग्रन्थावलिः

ग्रन्थाङ्कः २९.

---

# नानार्थार्णवसंक्षेपः

केशवस्वामिप्रणीतः

संस्कृतग्रन्थप्रकाशनकार्याध्यक्षेण

त. गणपतिशास्त्रिणा

संशोधितः ।

द्वितीयः सम्पुटः—तृतीयः काण्डः ।

---

स च

अनन्तशयने

महामहिमश्रीमूलकरामवर्मकुलशेखरमहाराजशासनेन

राजकीयमुद्रणयन्त्रालये

मुद्रयित्वा प्रकाशितः ।

कोळम्बाब्दाः १०८८, क्रैस्ताब्दाः १९१३.

॥ श्रीः ॥

राजराजीयापरनामा

# नानार्थार्णवसंक्षेपः

केशवस्वामिप्रणीतः ।

---

## त्र्यक्षरकाण्डः ।

### स्त्रीलिङ्गाध्यायः ।

---

अथ खल्वयमत्यन्तः काण्डः प्रस्तूयतेऽधुना ।
नानार्थत्र्यक्षराणां यः सर्वस्वं काव्यकारिणाम् ॥ १ ॥
तत्रादौ तावदध्यायः स्त्रीलिङ्गानां प्रणीयते ।
अथ ख्रियामभिख्या स्याच्छोभायां कीर्तिसंज्ञयोः ॥ २ ॥
प्रज्ञायामपि विख्याताचाभिधा तूक्तिसंज्ञयोः ।
अहल्या तु सरोभेदे भार्यायां गौतमस्य च ॥ ३ ॥
अवक्रा स्याज्जलतृणे ज्ञेया चिञ्चोटिकाह्वये ।
शैवले चाप्यथाध्यण्डा त्वामलक्यात्मगुप्तयोः ॥ ४ ॥
असिक्नी तु निशीथिन्यां नदीभेदे तु कथ्यते ।
तथैवान्तःपुरप्रेष्यस्त्रियां स्यादवनिः पुनः ॥ ५ ॥
भूमिनद्यङ्गुलीषु स्यादङ्गुलिस्तु गजस्य च ।
कराग्रे कर्णिकासञ्ज्ञे शाखास्वप्यङ्गुलिस्त्वथो[1] ॥ ६ ॥
अनुष्टुप् छन्दसो भेदे ज्ञेया द्वात्रिंशदक्षरे ।
तथा देवासुरादीनां छन्दोभेदेषु च स्मृता ॥ ७ ॥
वाचि सम्भावनायां तु स्यादाशङ्का भयेऽपि च ।
आकृतिस्तु शरीरे स्यादाकारव्यक्तिजातिषु ॥ ८ ॥
अष्टाशीत्यक्षरे च स्याच्छन्दोभेदेऽप्यथाततिः ।
अन्धकारे तथा मार्गे विस्तारे च प्रकीर्तिता ॥ ९ ॥

---

१. 'षु' ग. पाठ.

आयतिर्दीर्घतायां स्यात् प्रभावागामिकालयोः ।
आहुतिर्यज्वनां स्याच्च स्रुगासादनकर्मणि ॥ १० ॥

ताडने चाप्यथालप्तिः कीर्तिता गीत्युपक्रमे ।
तथैवालपने विद्यात् स्वासन्दीमासनान्तरे ॥ ११ ॥

केचिद् वेत्रासनेऽन्ये तु वदन्त्यासनमात्रके ।
इन्द्राणी तु शचीदेव्यां रतबन्धान्तरे तथा ॥ १२ ॥

स्त्रीणां स्यात् सिन्धुवाराख्यवृक्षे च स्यादथोपधा ।
शब्दस्यान्त्यादलः पूर्ववर्णे च सुपरीक्षणे ॥ १३ ॥

उपधानक्रियाया च्च्छन्दनायां च कीर्तिता ।
माघस्य कोपधेत्यत्र* मृग्योऽर्थ उपधापदे ॥ १४ ॥

उर्वरा सर्वसस्याढ्यभूमौ स्याद् भूमिमात्रके ।
ऋच्छरा खड्गुलौ ज्ञेया वेश्यायां चाथ कर्णिका ॥ १५ ॥

करिहस्ताङ्गुलौ पद्मबीजकोश्यां च भूषणे ।
कर्णस्य मध्यमाङ्गुल्यामपि कश्चिदभाषत ॥ १६ ॥

कणिका तिलमण्डे$ गोधूमे तच्चूर्णके लवे ।
कलशिर्भेषजस्तम्बे पृश्निपर्णीति विश्रुते ॥ १७ ॥

दधिप्रमथनस्थाल्यां स्यात् कृपाण्यां तु कर्तरी ।
इषोः पुङ्खे च कर्णान्धूः@ पुनरुक्षिसिकाह्वये ॥ १८ ॥

कर्णभूषणभेदे स्यात् कर्णपाल्यामपि स्मृता ।
काकणी मानदण्डस्य माषस्य च पणस्य च ॥ १९ ॥

तुर्येऽशे पादुकाया च कपर्दानां च विंशतौ ।
एकस्मिंश्च कपर्दे स्यादिति प्राहुर्मनीषिणः ॥ २० ॥

---

1. 'स्या' ग पाठ.

---

* 'अयशोभिर्दुरालोके कोपधा मरणादृते' (स १९. श्लो ५८) इति माघ. । उपधा उपाय. । $ 'कणिका तिलकाण्डेऽक्षे' (पृ २४७. श्लो. ४) इति तु वैजयन्ती । @ अन्दः शब्द पादभूषणार्थको वैजयन्त्यादिषु दृश्यते । वृहदभिधाने तु कर्णान्दूशब्दस्य कर्णभूषणार्थकत्वमुक्तम् ।

कारवी बाष्पिकासंज्ञभेषजे कृष्णजीरके ।
अजमोजाविशेषे च खराश्वासंज्ञके तथा ॥ २१ ॥
शतपुष्पासमाख्ये च भेषज्ये भाषिता बुधैः ।
कालिन्दी यमुनानद्यां कृष्णभार्यान्तरे तथा ॥ २२ ॥
किणिही स्यादपामार्गे गिरिकर्ण्यां च भाषिता ।
कुसृतिस्तु कुमार्गे स्यात् कुगतौ शाठ्य एव च ॥ २३ ॥
कूर्चिका मस्तुपिण्डे स्यात् सूचितूलिकयोरपि ।
कवाटस्याङ्कुटे चापि खलिनी तु खलव्रजे ॥ २४ ॥
धाराहीमुसलीत्यादिपदैः स्तम्बे च विश्रुते ।
ग्रहणी तूदरव्याधिविशेषे मृत्युमेद्रयोः ॥ २५ ॥
भद्राश्वयोस्तु गन्धालीत्येतद् रभसभाषितम् ।
गुडूची(त्य:स्व)मृतानाम्नि वल्लयां कुस्तुम्बुरुण्यपि ॥ २६ ॥
गोजिह्वा दार्विकासंज्ञस्थावरे परिकीर्तिता ।
मनःशिलायां गोश्चापि जिह्वायां क्षुद्रधान्यके ॥ २७ ॥
गवीथुगिति विख्याते गोलोमी तु वचाह्वये ।
भेषजे सितदूर्वायां भूतकेशाख्यवस्तुनि ॥ २८ ॥
घटिका तु मुहूर्ताख्ये काले नाडीद्वयात्मके ।
गवादिदोहपात्रे च पारिसंज्ञे प्रकीर्तिता ॥ २९ ॥
घृताची त्वप्सरोभेदे निशायां च प्रकीर्तिता ।
चर्चरी चर्मटिरिति प्रसिद्धे हास्यवाक्यके ॥ ३० ॥
उक्ता कर्पटिकानां च गीतभेदे मनीषिभिः ।
चिरण्टी त्ववगन्तव्या द्वितीयवयसि स्त्रियाम् ॥ ३१ ॥
मुचासिनीति प्रथिते स्त्रीविशेषे च कोविदैः ।
*चुलकी शिशुमा(री:रे)स्यात् कुण्डीभेदे कुलान्तरे ॥ ३२ ॥

१. 'र्चा' ख. ट. पाठः. २. 'शा' क. ट. पाठः. ३. 'रि' ग. ट. पाठः.

* 'चुलकी शिशुमारे स्यात् कुण्डीभेदे कुलान्तरे' इति तु मेदिनी ।

जिगीषाशब्द उद्दिष्टो व्यवसायजयेच्छयोः ।
जुगुप्सा तु घृणायां च निन्दायां चाथ झल्लरी ॥ ३३ ॥

वाद्यभेदेऽजयस्त्वाह हुडुक इति चिन्त्यधीः ।
अवस्थाभेदमापन्ने केशभेदे च कीर्तिता ॥ ३४ ॥

झम्पटिक्षुविशब्दाभ्यां प्रसिद्धे शब्दवेदिनाम् ।
छत्रान्तालम्बिवस्त्रे च तूणता तु धनुष्यपि ॥ ३५ ॥

तूणत्वे चेति बह्वाभिः कविना चोररीकृतम् ।
तच्चास्मभ्यं न रोचिष्णु तूणतक्षेपशङ्कया ॥ ३६ ॥

दीधितिस्त्वङ्गुलौ रश्मावियमीधन्वोस्तु धेनुका ।
नालिका तु चतुर्हस्तप्रमाणे युगसंज्ञके ॥ ३७ ॥

नवहस्तप्रमाणे च मुनिभिः परिभाषिता ।
चुल्लीरन्ध्रे च रन्ध्रे च नाले काले तथैव च ॥ ३८ ॥

वेणुभाजनभेदे च जलशाकलतान्तरे ।
कलम्बीशतपर्वादिशब्दैः शास्त्रेषु विश्रुते ॥ ३९ ॥

निर्वृतिर्मनसस्तोषे मोक्षेऽस्तमयवादयोः ।
नियतिः संयमे दैवे निकृतिः शठशाठ्ययोः ॥ ४० ॥

नितत्निस्तु तृतीयस्यां कृत्तिकायां निबोधत ।
सप्तानां कृत्तिकानां तु दूर्वायामपि मन्वते ॥ ४१ ॥

निःश्रेणिस्त्वधिरोहण्यां खर्जूरीभूरुहेऽप्यथ ।
शेफालिकायां निर्गुण्डी सिन्दुवारेऽथ नैचिकी ॥ ४२ ॥

उत्तमायां गवि प्रोक्ता शिरोदेशे च सा गवाम् ।
प्रक्रिया त्वधिकारे स्याच्छब्दस्योत्पादनेऽपि[1] च ॥ ४३ ॥

प्रकारे च प्रतिष्ठा तु स्थितौ माहात्म्य एव च ।
षोडशाक्षरके चापिच्छन्दोभेदे च गौरवे ॥ ४४ ॥

१. 'पि च' ग. पाठः.

क्षितौ ह्रस्वेऽपि पठिता समाम्नाये मनीषिणा ।
प्रतिमा तु प्रतिकृतौ गजानां दन्तबन्धने ॥ ४५ ॥

रभसोऽनुकृतौ चाह खेये तु परिखाम्बुधौ ।
भूभृत्यपि समाम्नाता समाम्नाये मनीषिणा ॥ ४६ ॥

प्रकृतिः पञ्चभूतेषु स्वभावे मूलकारणे ।
कारणे शिश्नयोन्योश्च जन्त्वमात्यादिमातृषु ॥ ४७ ॥

प्रत्ययात् पूर्वभागे चच्छन्दसोश्चोभयोरपि ।
अष्टाक्षरेऽप्यत्युक्ताख्ये तथा सलिलसंज्ञके ॥ ४८ ॥

विज्ञेया चतुराशीतिस्वरे च प्रसृतिः पुनः ।
तन्तौ वाचि च जाले चा तात्पर्येऽपि च बन्धने ॥ ४९ ॥

अथ प्रवृत्तिर्वार्तायां व्यापारे हस्तिनां मदे ।
कुलत्थसंज्ञधान्ये चाप्युच्चारेऽपि च सज्जनः ॥ ५० ॥

प्रवाहे च प्रसूतिस्तु पुत्रयोरपि जन्मनि ।
प्रसवाख्यक्रियायां च वल्लीविस्तारयोः पुनः ॥ ५१ ॥

प्रतातिर्वैजयन्त्यां तु वीरुधीत्याह शब्दवित् ।
पक्षातिः पक्षमूलेऽपि प्रतिपत्संज्ञके तिथौ ॥ ५२ ॥

पद्धतिः पथि पङ्क्तौ च परीष्टिस्तु परीक्षणे ।
मार्गणे परिचर्यायामभितो यजनेऽपि च ॥ ५३ ॥

प्रवेणी तु कुथाया च वेण्यां चाथ प्रतोल्यसौ ।
पुरस्य गोपुरे चापि रथ्यायां प्रतिपत् पुनः ॥ ५४ ॥

स्याद् बहिष्पवमानस्य प्रथमायामृचि स्मृता ।
पक्षस्य प्रथमाया च तिथौ आद्येऽपि कीर्तिता ॥ ॥ ५५ ॥

प्राचिका तु भवेत् तत्र या भवेद् वनमक्षिका ।
श्येनासंज्ञविहङ्गे च पालङ्क्या तु प्रकीर्तिता ॥ ५६ ॥

शाकभेदे च रभसः सल्लक्यामप्यभाषत ।
पापर्द्धिर्मृगयायां स्यात् पापर्द्धौ च प्रकीर्तिता ॥ ५७ ॥

**पाताली** वागुरास्थाल्योर्जङ्घामांसे तु **पिण्डिका** ।
रथचक्रस्य नाभौ च गृहधिष्ण्येऽथ **पूतना** ॥ ५८ ॥

देवजातिविशेषे च हरीतक्यां च तेषु च ।
रवेः शतानि चत्वारि रश्मीनां वृष्टिसृष्टये ॥ ५९ ॥

तेषां तुर्यशते ये स्युः रश्मयः **पूतना** पुनः ।
सेनाभेदे च वाहिन्यास्त्रिगुणात्मनि सा तथा ॥ ६० ॥

सेनायामपि युद्धे च **पृथिवी** तु महीक्षयोः ।
**पृथ्वीका** पुनरेलायां स्यात् तथा कृष्णजीरके ॥ ६१ ॥

**बलाका** तूदिता सर्वैर्बिसकण्ठ्याख्यपक्षिणि ।
शाकटायनसूरिस्तु व्याचष्टे स्मादिशाब्दिकः ॥ ६२ ॥

बन्धक्यां कुलटायां चेत्यथात्र रभसोऽपठीत् ।
स्याद् वारललनायां च व्रीहिभेदे च **वर्वटी**[1] ॥ ६३ ॥

**भिल्लिका** तु नदीभेदे शरावत्याह्वये स्मृता ।
तथा माषादिचूर्णे च वजयन्त्यां त्वभूद् भ्रमः ॥ ६४ ॥

लिपिसङ्करतः स्थाने शरावत्याः शतावरी ।
अस्यार्थत्वेन निर्दिष्टा स्थेयान् वः शाकटायनः ॥ ६५ ॥

ब्रवीति वक्ते रभसः पुनरत्र पठत्यमुम् ।
**भूजम्बू**रिति गोधूमे विकङ्कतफलेऽपि च ॥ ६६ ॥

**मञ्जूषा**वार् तु पेडायां पुरे च कथिता बुधैः ।
**मर्यादा** तु व्यवस्थायां सीमायां च प्रकीर्तिता ॥ ६७ ॥

अथो **मनाका** कामिन्यां हस्तिन्यां च प्रकीर्तिता ।
अथात्र रभसेनायमर्थश्चैष उदीरितः ॥ ६८ ॥

---

१ 'ति' ख ग ब पाठः ।

---

ॐ मातृकासु वर्णेत्रस्त्र पाठो यद्यपि दृश्यते, तथापि भाषान्तरधातुपदादनुगर्धनत्व निर्धारितः ।

स्यात् कृत्रिमा मातृका या †दातृका कारणे स्मरे (?) ।
इत्येवमथ मीमांसा वेदवाक्यार्थचिन्तके ॥ ६९ ॥

शास्त्रे विचारणायां च सूरिभिः परिभाषिता ।
मुरली वंशवाद्ये च काहलायाश्च भेदके ॥ ७० ॥

पुण्डिकासंज्ञकेऽथ स्याद् मेखला कटिसूत्रके ।
काञ्च्यामिति तु सिंहायाः श्रोणिस्थाने तु केचन ॥ ७१

खड्गत्सरुं निबध्नन्ति येन द्रव्येण तत्र च ।
पर्वतस्य नितम्बेऽपि रशना त्वङ्गुलावपि ॥ ७२ ॥

काञ्च्यां च रेणुका तु स्याद्धरेण्वाह्वयभेषजे ।
जमदग्नेश्च भार्यायामथ स्याद् रेवती गवि ॥ ७३ ॥

बलभद्रस्य पत्न्यां च पौष्णनक्षत्र एव च ।
तद्युक्तकालमात्रे च तत्र जातस्त्रियामपि ॥ ७४ ॥

मालत्यां भेषजस्तम्बे नागदन्तीति विश्रुते ।
केषुचित् सामभेदेषु रैवत्य इति भूम्नि च ॥ ७५ ॥

प्रत्येकं स्युस्तृचे चापि रेवतीर्नउपक्रमे ।
मातृष्वप्याह रभसः शब्दवेदी सुधीरथ ॥ ७६ ॥

पथ्यायां गव्युमाकन्यालोहिनीषु च रोहिणी ।
कण्ठरोगप्रभेदे च नक्षत्रे च प्रजापतेः ॥ ७७ ॥

तद्युक्ते कालमात्रे च तत्र जातस्त्रियामपि ।
श्रुतौ तु मूलनक्षत्रेऽप्याम्नाता दृश्यते बुधैः ॥ ७८ ॥

कृष्णस्य पत्नीभेदेषु प्रधानेष्वेकयोषिति ।
लक्तिका गवि गोधायां वाद्यभेदे च कीर्तिता ॥ ७९ ॥

---

१. 'हि' ख. ग. पाठ. २ 'क्तै' ख ग. पाठ.

---

† 'धातृका' इति स्यात् । तथा च मेदिनी 'मातृका मातृकाधात्र्योर्देवीभिद्वर्णमालयोः' इति ।

डुम्बिका तु स्त्रियां वाद्यभेदे भक्षान्तरे तथा ।
उलुम्बसंज्ञे वनिता पुनः स्त्रिग्धस्त्रियामपि ॥ ८० ॥

स्त्रीमात्रे च वरत्रा तु वध्र्यां वर्तौ च कीर्तिता ।
वसतिस्तु गृहे रात्राववस्थाने जिनाश्रमे ॥ ८१ ॥

वर्तनिस्तु भवेद् वृत्तौ मार्गे स्यात् तर्कपिण्डके ।
स्याद् वल्लरिस्तु मञ्जर्यां लतायां च धनञ्जय ॥ ८२ ॥

वलभिस्तु पुरीभेदे कूटागारेऽपि कीर्तिता ।
वाशिता तु करिण्यां च स्त्रियां चाप्यथ वाणिनी ॥ ८३ ॥

मत्तयोषिति नर्तक्यां विदग्धायां च कीर्तिता ।
वाणीचिस्तु स्मृता योगे छायायामपि वाचि च ॥ ८४ ॥

विरजा तूद्देशस्थे पूर्भेदे जम्बुपादपे ।
वितण्डा तु भवेत् कच्छीशाके रभसभाषिता ॥ ८५ ॥

स्वपक्षस्थापनाहीनवादे तार्किकविश्रुता ।
विपणिः पण्यवीथ्यां स्यादापणेऽपि प्रकीर्तिता ॥ ८६ ॥

स्याद् विच्छित्तिस्तु विच्छेदे भावभेदे च योषिताम् ।
स चायं वल्पमाल्यादेर्न्यासोऽनास्थोपशोभित ॥ ८७ ॥

अथो विपञ्ची वीणायां वीणाभेदे च सोऽप्यसौ ।
नवतन्त्रीकोऽल्पदण्डो विदारी तु रुगन्तरे ॥ ८८ ॥

कोर्ष्ठीसंज्ञलताभेदेऽप्युक्ता वेद्यां तु वेदिका ।
तथैवाङ्गुलिमुद्रायां शर्करा तु शिलान्तरे ॥ ८९ ॥

रोगभेदे [1]सितायां च शकलाल्पकपालयोः ।
शर्करावत्प्रदेशे च गुडे चाप्याह यादवः ॥ ९० ॥

मृते तु खण्डविकृतौ रभसो नाममालयाः ।
शलाका तु भवेत् सूच्यां द्यूतोपकरणेऽपि च ॥ ९१ ॥

---

१. 'र' क ख ग. पाठ.

अस्थूलदीर्घ[1]काष्ठादिमये वस्तुनि चाप्यथ ।
श्वदंष्ट्रा गोक्षुराभिख्यस्तम्बे यन्त्रान्तरेऽपि च ॥ ९२ ॥

परिखाया बहिर्भूमौ राज्ञां दन्तान्तरे शुनाम् ।
श्ववृत्तिस्तु शुनां वृत्तौ सेवायां चाथ शष्कुली ॥ ९३ ॥

अपूपभेदे कर्णस्य प्रदेशे च क्वचित् स्मृता ।
शकन्धुर्देवताभेदे तथैव स्याद् वनस्पतौ ॥ ९४ ॥

शिञ्जिनी नूपुरे मौर्व्यां शुश्रूषा तु कथानके ।
उपास्तौ श्रोतुमिच्छायां षण्डाली तु सरस्यपि ॥ ९५ ॥

स्त्रियामपि सरागायां तैलमानेऽथ सप्तला ।
सातलायां तथा गुञ्जानवमालिकयोरपि ॥ ९६ ॥

सन्धिला तु सुरुङ्गायां नदी‡मन्दिरयोरपि ।
सरघा तु शुनीभेदे देवानां मक्षिकान्तरे ॥ ९७ ॥

मधुकारिण्यथ श्रेणौ सरणिर्मार्ग एव च ।
सन्ततिस्त्वन्ववाये स्यात् पारम्पर्येऽपि पुत्रयोः ॥ ९८ ॥

सम्मतिस्त्वपि वाञ्छायामनुज्ञापू[2]जयोरपि ।
समितिः परिषत्स्थाने युद्धे संसदि सङ्गमे ॥ ९९ ॥

स्यात् संवित्तिस्तु संवादे ज्ञाने संसिद्धिवाक् पुनः ।
सम्यक्सिद्धौ स्वभावे च मेदोमायां च कश्चन ॥ १०० ॥

स्यन्दिनी त्वपि लालायां गोभेदे च क्षरत्स्तने ।
सन्धिनी त्वप्यकाले या दुग्धा गौस्तत्र केचन ॥ १०१ ॥

---

१. 'र्घे' क. ख. ग. 'पाठः. २. 'र' क. पाठः.

---

‡ 'मदिरयोः' इति स्यात् । 'सन्धिला तु सुरुङ्गायां नदीमदिरयोः स्त्रियाम्' इति रत्नमाला ।

द्विकालदोह्या सत्येककालं गौर्दुह्यते हि या ।
तत्रेत्यन्ये परे त्वाहुर्वृषाक्रान्तगर्भाप्यिति ॥ १०२ ॥

वत्सान्तरस्य सन्धानात् सन्धिनीत्यपरे विदुः ।
सिकतास्तु बहुष्वेकैर्वालुकायामुदीरिताः ॥ १०३ ॥

सिकतावति देशे च तथैव ब्रुवते परे ।
सिंहिका तु जनन्यां स्याद् राहो: किञ्च महार्णवम् ॥ १०४ ॥

लङ्घयन्त हनूमन्त याप्यगच्छज्जिघासया ।
तस्यामपि च राक्षस्यां कन्याभेदेऽस्य लक्षणम् ॥ १०५ ॥

अविवाह्यासु कन्यासु नतजानुरिति स्मृतम् ।
एतत् त्वदृष्टपूर्वं च द्रष्ट्य च रभसोदितम् ॥ १०६ ॥

सिथि[2]ला तु नदीमध्यमुरुन्नासु भवेदिति ।
स्तैहिनी तु महीजस्य फले स्यादङ्कुरे तथा ॥ १०७ ॥
स्रुपत्री तु भवेत् काखल्ल्यां कृष्णे च जीरके ।
हारिणिस्तु भवेन्मूत्यां कुल्यायां ह्रादिनी पुन ॥ १०८ ॥
चर्मे तटिति चेत्येव त्र्यक्षरस्त्र्यध्याय: समाप्तवान् ॥ १०८३ ॥

इति त्र्यक्षरकाण्डे स्त्रीलिङ्गाध्याय

---

अथ त्र्यक्षरकाण्डे पुल्लिङ्गाध्यायः ।

अथ त्र्यक्षरपुंल्लिङ्गशब्दाध्यायः प्रणेष्यते ।
अथ पुंस्यर्णवोऽम्भोधौ तथा पण्णवतिस्वरे ॥ १ ॥

---

१. 'या सुर्भीर' क ग ट पाठ. २. 'थि' ग, 'कि' ट. पाठः. ३. 'शि ख. पट.

छन्दोभेदेऽन्वयस्त्वन्ववायेऽनुगमने तथा ।
सम्बन्धे चात्ययस्तु स्यान्मरणे दोषदण्डयोः ॥ २ ॥

अतिक्रमे च कृच्छ्रे च मृग्यं त्वर्थान्तरं बुधैः ।
‡'नानात्ययानां वृक्षाणां' 'कामा नानात्यया' इति ॥ ३ ॥

एवमाद्यौपनिषदप्रयोगेषु मनीषिभिः ।
अनलश्चित्रके वह्नावनयस्तु विपद्यपि ॥ ४ ॥

व्यसनेष्वशुभे दैवेऽप्यनीतौ च चतुर्ष्वपि ।
स्यादभावस्त्वसत्तायां मृत्यौ च रभसोऽपठीत् ॥ ५ ॥

अस्य विष्णोश्च भावेऽथो अलिन्दः प्रघणाह्वये ।
गृहैकदेशे विद्वांस्तु व्याचष्टे शाकटायनः ॥ ६ ॥

तद्यथा भोजनस्थान इत्यथ स्यात् प्रसाधने ।
अलुपोऽग्रौ नापितेऽथो अञ्जलिः करसम्पुटे ॥ ७ ॥

तथा कुडवसंज्ञे च परिमाणेऽध्वतिः पुनः ।
अग्नौ च *शास्त्रभेदे च यात्स्नायामवधिः पुनः ॥ ८ ॥

विवरे सीम्नि काले चाप्यथर्वा त्वृषिभेदके ।
वेदभेदे च तत्रत्यमन्त्रेष्वपि तथास्य च ॥ ९ ॥

अध्येतर्यङ्गिरास्तु स्यादृषिभेदे तथास्य च ।
वंश्येष्वङ्गिरसो भूम्नि शाकटायनदृक् † पुनः ॥ १० ॥

बृहस्पतावाङ्गिरसं प्रोक्तवानथ कथ्यते ।
अनेहा काल इन्द्रे चाप्यनेधास्त्वग्निवातयोः ॥ ११ ॥

आम्नायस्तु भवेद् वेदे सम्प्रदायान्ववाययोः ।
पाठाभ्यासे चागमस्तु शास्त्रेऽप्यागमनेऽपि च ॥ १२ ॥

---

‡ 'नानात्ययानां नानाफलानाम्' नानात्ययाः, अत्ययोऽतिगमनं, वस्तुस्वरूपमर्यादा विषयेषु प्रवेशः.' (छा ३. ९. १, ४. १०. ३) इति आनन्दगिरि । * 'शस्त्रभेदे' इति स्यात् ।
† शाकटायनपण्डित इत्यर्थः ।

तद्देशोद्भवघोटे स्यादाघाटः सीमघातयोः ।
आघातस्ताडने घातेऽप्यापातः पतने तथा ॥ २४ ॥

तदात्वे चाप्यापतनेऽप्याधारस्त्वालवालके ।
अम्बुबन्धेऽधिकरणे चाप्यां त्वजय उक्तवान् ॥ २५ ॥

आरामः स्यादुपवने विरामे परिकीर्तितः ।
आयासस्तु *प्रसत्ने स्यात् क्लेशे चायामवाक् पुनः ॥ २६ ॥

दैर्घ्ये रज्जुपटादीनामभितश्च विकर्षणे ।
आचामस्त्वोदनस्य स्यान्निःस्रावे मासराह्वये ॥ २७ ॥

आचान्तौ चाप्यथावाप आलवाले तथैव च ।
प्रक्षेपे न्यसने त्वन्येऽथाश्वासो विश्रमे तथा ॥ २८ ॥

ग्रन्थावच्छेदभेदे च काव्यादीनां प्रकीर्तित ।
आशुक्षेपेऽप्यथातङ्को रोगे सन्तापशङ्कयो. ॥ २९ ॥

आलेपः पुनरालिप्तावनुलेपनवस्तुनि ।
आक्षेपः पुनराकृष्टौ निन्दाभर्त्सनयोरपि ॥ ३० ॥

वातव्याधिविशेषेऽथो परिपूर्णत्वयत्नयोः ।
आभोगो वारुणच्छत्रेऽप्यामोदः पुनरुच्यते ॥ ३१ ॥

हर्षे गन्धविशेषे च स च गन्धोऽयमीदृश' ।
विमर्दोत्थः परिमलो गन्धो जनमनोहरः ॥ ३२ ॥

स एव योऽतिनिर्हारी स स्यादालोकवाक् पुन. ।
उद्द्योते दर्शनेऽपि स्यादिति प्राहुर्मनीषिणः ॥ ३३ ॥

आयोगोऽव्याप्तौ गन्धमाल्याद्युपहृतौ तथा ।
आजीवस्तु क्षपणके जीविकायां च कीर्तितः ॥ ३४ ॥

---

. 'रतावपि की' ख पाठ. २ 'च' ड पाठ

---

'प्रयत्ने' इति स्यात् ।

आपीडः शेखरे जातिच्छन्दोभेदेऽप्यथासवः ।
पूगवृक्षे तथा मद्यसन्धाने यस्य चापरम् ॥ ३५ ॥
नाम स्यादासुतिरिति तत्र मद्यान्तरे तथा ।
अपक्वेक्षुरसैः सिद्धे स्यादाबन्धस्तु बन्धने ॥ ३६ ॥
योक्त्रे च स्यादथारक्षो हस्तिनः कुम्भयोरधः ।
प्रदेशे नगरादीनां चोरादिपरिहारके ॥ ३७ ॥
आत्मभूर्मन्मथे विष्णौ विरिञ्चे चाप्यथोत्सवः ।
उत्सेकामर्षयोरिच्छाप्रसरे च महे तथा ॥ ३८ ॥
रभसस्तूत्सुके स्याद तदेतदसमञ्जसम् ।
उत्सेधो मकुटच्छत्रध्वजपूर्णीपकाययोः ॥ ३९ ॥
प्रसोमदेववर्गस्य चतुर्थं सान्ति चोन्नतौ ।
उत्सङ्गः पुनरङ्के स्याद् गजस्यावयवान्तरे ॥ ४० ॥
गजस्य पूर्वपादस्य पिण्डिकान्त नख्वात् परम् ।
विभज्य सप्तधा तत्र क्रमाद् भागश्चतुर्थक ॥ ४१ ॥
अधः प्रारभ्य जानीयात् तच्चाप्यवयवान्तरम् ।
अन्याधाने च रभसोऽथोत्सर्गस्त्यागदानयोः ॥ ४२ ॥
सामान्यवाक्येऽथोद्घातः कुठ्ठे समुपक्रमे ।
स्यात् पादस्खलने चापि स्यादुद्धननकर्मणि ॥ ४३ ॥
गजस्य कर्णमूलाच्च चूलिकासंज्ञकात परे ।
प्रदेशे मानभेदे च प्राणायामस्य कालत. ॥ ४४ ॥
तस्य लक्षणमप्युक्तं योगविद्भिः पुरातनैः ।
चोटिका त्रिः परामृश्य जानु स्फोटक्रियाथ ताः ॥ ४५ ॥
षट्त्रिंशन्मन्द उद्घातो द्विगुणत्रिगुणो पुनः ।*
उत्पातस्तूदितः सद्भिरुपप्लव इति श्रुत[1] ॥ ४६ ॥

१. 'त' ख. पाठ.

* इत.पर 'मध्यमर्थवोत्तमश्च प्रथमे उद्घात वा' इत्यर्धमपेक्षितम ।

अगस्त्यस्तु पुमान् कुम्भसम्भवे स्यान्महामुनौ ।
अगस्तिसंज्ञवृक्षे च क्लीबस्य फलपुष्पयोः ॥ १०५ ॥
अजन्यं क्लीबमुत्पाते जन्यहीने तु तत् त्रिषु ।
अरालो यक्षधूपाख्यनिर्यासे पुंसि कीर्तितः ॥ १०६ ॥
नटानां हस्तविन्यासभेदे भुग्ने तु भेद्यवत् ।
अतिप्रमाणकाये तु गजभेदे द्वयोरयम् ॥ १०७ ॥
अलातमुल्मुके[1] (क्लीब)मनाते त्वभिधेयवत् ।
अङ्गदं नपि केयूरे वालिपुत्रे तु पुन्ययम् ॥ १०८ ॥
स्त्रियां वामनाख्यस्य दिग्गजस्याह योषिति ।
अर्दनं तु गतौ क्लीब याचने चापरे पुन ॥ १०९ ॥
अर्दना याचने स्त्रीत्वे हिंसायां त्वर्दना न ना ।
अपटी स्त्री काण्डपटे पटहीने तु भेद्यवत् ॥ ११० ॥
तत्रापि च स्त्रियां वृत्तिर्यदा स्यादपटा तदा ।
अवटस्तु पुमान् गर्ते कूपे मानान्तरेऽपि च ॥ १११ ॥
चतुर्विंशत्यङ्गुलके पटहीने तु स त्रिषु ।
अगमस्तु गिरौ वृक्षे गतिहीने तु भेद्यवत् ॥ ११२ ॥
अनृतं तु कृषौ क्लीबमसत्ये(तु[2] च) त्रिषु त्वदः ।
असत्ययुक्तेऽप्यनृतेऽप्यपुंस्त्वे त्वनृता स्त्रियाम् ॥ ११३ ॥
असुरस्तु पुमान् मेघे वास्तुदेवान्तरेऽपि च ।
कोष्ठपङ्क्तौ पश्चिमायां षष्ठे दक्षिणतः स्थिते ॥ ११४ ॥
द्वे तु दैत्ये गजे च स्त्री पुनः कांस्यास्यलोहके ।
असितस्तु पुमान् ज्ञेय इक्ष्वाकुकुलजे नृपे ॥ ११५ ॥

---

१. 'के कमे निकने(?) त्व' ख. ग. पाठ   २. 'तु' क. ख. ङ. पाठः. ग. घ. पाठः

शनैश्चरे च वर्णे च कृष्णे तद्वति तु त्रिषु ।
अबद्धे चाप्यथासाध्यजिह्वारोगान्तरेऽलसः ॥ ११६ ॥

पादरोगविशेषे च स्यादुष्ट्रस्य ज्वरेऽपि च ।
आलस्यवति तु त्रि स्यादलसा तु स्त्रियामियम् ॥ ११७ ॥

हंसपाद्यामथाध्वर्यावध्विनः पुंसि पावके ।
तथाविधाने गुप्तावप्युदकेऽपि नपुंसकम् ॥ ११८ ॥

द्वयोस्तु विहगे भासे मृगे चायाकृतं नापि ।
यवव्रीह्यादिसत्तुपहविष्यजनिते त्रिषु ॥ ११९ ॥

अधरस्तु पुमान् बन्धुसमूहे मूरुहान्तरे ।
स्त्री तु युद्धे द्वयोस्तु स्यान्मातृवाहाख्यजन्तुके ॥ १२० ॥

जलपक्षिविशेषे च स्यादथो अतसः पुमान् ।
वनस्पतिप्रभेदे स्यादतसी तु स्त्रियामियम् ॥ १२१ ॥

उमासंज्ञे धान्यभेदे वने तु स्याद् नपुंसकम् ।
अवसं स्त्री भवेत्तापे ना पाथेयाशनीयके ॥ १२२ ॥

वसाहीने पुनस्त्रिः स्यादवला तु स्त्रियामियम् ।
तथा चर्विततांबूलरसे भार्याग्रजे तु ना ॥ १२३ ॥

बलहीने पुनस्त्रिः स्यादजयस्योत्तरं वच ।
अवेलः पुंस्यपलापे स्त्र्यवेला पूगचूर्णके ॥ १२४ ॥

इत्यन्यत्र च वेलाया वेलाहीने तु भेद्यवत् ।
अलर्कस्तु सितार्के ना स्त्री तु तत्फलपुष्पयोः ॥ १२५ ॥

शाकभेदेऽप्यैलर्काख्या द्वे तु स्याद् रोहिते शुनि ।
अलका स्त्री कुबेरस्य नगरे मूर्धजे पुनः ॥ १२६ ॥

कुटिले पुंसि शण्डस्तु स्यादभीयं कदम्बके ।
अधानां त्रिस्त्वधाहिते स्त्री रथ्यायाधन्वान्छने ॥ १२७ ॥

. 'पि' ह., 'भि' ग. पाठ. २ 'वु' क पाठ. ३. 'स्व' स. पाठः ४. 'क्रदे' ह. पाठः

अण्डीरः पुरुषे पुंसि सज्वने मुष्कवत्पशौ ।
त्रि तुं शक्तेऽथाण्डुको ना मुष्के स्याद् द्वे तु टिट्टिभे ॥ १२८ ॥

अङ्कुरस्त्वस्त्रियां बीजप्ररोहे किञ्च शाखिनाम् ।
प्रतानभेदे क्लीबं तु रुधिरे रोम्णि वारिणि ॥ १२९ ॥

अथापरं क्लीबलिङ्गं सिद्धान्ते मुनयो विदुः ।
गजपाश्चात्यभागेऽथ त्रि॰ पूर्वप्रतियोगिनि ॥ १३० ॥

अन्यस्मिन्नप्यथापारः समुद्रे ना त्रिषु स्वयम् ।
अविद्यमानपारे स्यादश्विस्त्रस्तु पुमानयम् ॥ १३१ ॥

अग्नौ स्त्री रश्मिहविषोरम्बष्ठस्तु द्वयोरयम् ।
वैश्यायां ब्राह्मणाज्जाते विवाहादपरे पुन ॥ १३२ ॥

ब्राह्मणात् क्षत्रियाजाते विवाहेनेति मन्वते ।
सवर्णाख्ये नृपात् तूढवैश्यायामपरे विदुः ॥ १३३ ॥

जाते माहिष्यसञ्ज्ञके स्त्री त्वम्बष्ठा विधीयते ।
पाठाशार्ङ्गेष्ट्योर्यूथीचाङ्गेर्यो॰ स्थावरान्तरे ॥ १३४ ॥

मयूरविदलासंज्ञे काकमाच्यां च कश्चन ।
वैजयन्त्यां तु पिप्पल्यामप्यम्बष्ठामभाषत ॥ १३५ ॥

अग्निष्ठः पुंस्युपस्थावसंज्ञयूपद्वयान्तरे ।
स्थितयूपे त्रिषु स्वेष वह्निस्थे स्त्री त्वपष्ठवाक् ॥ १३६ ॥

अङ्कुशाग्रे पष्ठहीने पुनः स्यादभिधेयवत् ।
पष्ठश्च पर्वतप्रस्थ आख्यातः कृतबुद्धिभिः ॥ १३७ ॥

अत्यूहो गजभेदे ना त्रि त्वत्यर्थोहकादिषु ।
अत्यूहा नीलिकायां स्त्री नीलकण्ठखगे द्वयोः ॥ १३८ ॥

अणीचिस्तु पुमान् वेणौ त्रिषु शाकटिके मतः ।
असौम्येऽक्षण्यदृष्टिः स्त्री दृष्टिहीने तु भेद्यवत् ॥ १३९ ॥

---

१. 'त्व' ङ. पाठः. २ 'प' क ख. ग., 'था' ग. पाठ.. ३ 'णि' ङ. पाठ'.

अरणिः पुंस्त्रियोर्यज्ञवह्निमन्थनकाष्ठयोः ।
ना मुहुर्वचने[1] स्त्री तु या कन्या निःस्पृहा सतः ॥ १४० ॥
अविवाह्या भवेत् तस्यामथ स्यादङ्घ्रतिः पुमान् ।
वायौ प्रजापतौ च स्त्रीलिङ्गस्त्वर्थान्तरेऽस्त्ययम् ॥ १४१ ॥
इति बह्वादिपाठेन विज्ञेयमथ नाश्वतिः ।
अश्नावर्थान्तरे त्वस्ति स्त्रीलिङ्ग इति निश्चय ॥ १४२ ॥
बह्वादिपाठादेवास्य स्यादथो अंहतिः स्त्रियाम् ।
दाने व्याधौ च पिशिते पुंलिङ्गस्त्वंहिपादुके ॥ १४३ ॥
अमतिस्त्वभिधातौ ना द्वयोस्त्वाहुर्विचक्षणाः ।
छागचातकयोर्लिङ्गं त्वस्माभिर्नैव निश्चितम् ॥ १४४ ॥
रूपे प्रावृषि च त्रिस्तु निर्मितावरतिस्तु ना ।
असुखक्रोधयोस्त्रिस्तु रतिहीनेऽरतिः पुनः ॥ १४५ ॥
ज्ञेया शैलेन्द्रकन्याया पृथिव्यामपि सूरिभि. ।
देवमातरि गोवाचोर्होमार्थसमिदुक्षणे ॥ १४६ ॥
द्यावापृथिव्योस्त्वदितिः स्त्री त्रिस्तु द्वितिवर्जिते ।
अगस्तिस्तु पुमान् कुम्भसम्भवे मुनिपुङ्गवे ॥ १४७ ॥
अगस्त्यवृक्षे च स्त्री तु स्यात् तस्य फलपुष्पयोः ।
अवन्तिर्ना राजभेदे नीवृद्भेदे च भूम्नि च ॥ १४८ ॥
स्त्रियां त्ववन्तिराजस्य स्यादवन्ती स्त्र्यपत्यकः ।
उज्जयिन्याख्यनगरेऽप्यसातिस्तु पाथे स्त्रियाम् ॥ १४९ ॥
पुमांस्त्वतिथातौ स्यादातिथिस्तु पुमानयम् ।
कुशस्य तनयेऽपि स्यात् तथैव गृहमागते ॥ १५० ॥
अबन्धौ भोक्तुकामे च तिथिहीने तु मेघवत् ।
अरत्निः पुंस्त्रियोर्हस्ते सप्रकोष्ठततागुलौ ॥ १५१ ॥

---

१. 'लपने' क. पाठ. २. 'त्व' ख. ग. ङ. पाठः.

कीलकूर्परयोश्चान्ये पुनर्मानान्तरे विदुः ।
चतुर्विंशत्यङ्गुलेऽथ स्यादश्मावमनिः पुमान् ॥ १५२ ॥

कश्चित् त्वाह स्त्रियां रोगे पुंलिङ्गेऽस्त्वशनिः पवौ ।
वज्रनिर्घातयोश्च त्रि. पुन स्याच्छनिवर्जिते ॥ १५३ ॥

अ(त्मीद्र)निस्तु पुमानग्नौ जयहस्तिन्यथ स्त्रियाम् ।
पशूनां भक्षणे द्रोण्यां नालुन्यप्यथ दीधितौ ॥ १५४ ॥

अभीशुः प्रग्रहेऽश्वस्य बाहौ चाथाङ्गलौ स्त्रियाम् ।
अविष्ठस्तु द्वयोरश्वे पुंलिङ्गस्त्वपटोतरि ॥ १५५ ॥

अजिष्णुस्तु पुमानग्नावुदर्के तु नपुंसकम् ।
अररुस्त्वसुरे द्वे स्यान्मन्थनेऽथायुधे नपि ॥ १५६ ॥

अगुरु क्लीं शिंशपाया जोङ्गके पुन्नपुंसकम् ।
लघुनि स्याद् भेद्यलिङ्गमश्वयुक् तु स्त्रियामियम् ॥ १५७ ॥

अश्विन्याह्वयनक्षत्रे तद्युक्ते कालमात्रके ।
जाते तु तत्र त्रिरथो अहिभुग् गरुडे पुमान् ॥ १५८ ॥

द्वे मयूरे भेद्यलिङ्गस्त्वहिभोजिनि कीर्तितः ।
अंशुमांस्तु पुमान् सूर्ये चन्द्रे चाथमहीपतौ ॥ १५९ ॥

दिलीपाख्यस्य नृपतेस्तातेऽथांशुमती स्त्रियाम् ।
पृश्निपर्णीसालपर्ण्योरंशुयुक्ते तु भेद्यवत् ॥ १६० ॥

मुहूर्तभेदे त्वभिजित् क्रतुभेदे च पुंसि सः ।
नक्षत्रभेदे तद्युक्तकालमात्रे च स त्रि तु ॥ १६१ ॥

तत्र जाते पुमांस्तु स्यादहिजिद् विष्णुशक्रयोः ।
अहेस्तु जेतरि त्रि स्यादरुन्धत् त्वभिधेयवत् ॥ १६२ ॥

अरोधके वसिष्ठर्षिपत्न्यां तु स्यादरुन्धती ।
वचायां च स्त्रियामश्विसंयुक्ते त्वभिधेयवत् ॥ १६३ ॥

अस्थिमानस्थिसङ्घातसंज्ञवल्ल्यन्तरे तु ना ।
अङ्कुरी तु वसन्ते ना वृक्षे चाथ त्रि साङ्कुरे ॥ १६४ ॥

अहिद्विड् गरुडे पुंसि शक्रे च नकुले पुन ।
द्वे मयूरे त्रिषु पुनरहेर्द्वेषस्य कारिणि ॥ १६५ ॥

अनड्वांस्तु बलीवर्दे नार्य्यांया तु स्त्रियां द्विधा ।
अनडुह्यनड्वाहीत्यापाढा तु स्त्रियामियम् ॥ १६६ ॥

आषाढानक्षत्रयुक्तपौर्णमास्या पुमांस्त्वयम् ।
आषाढः शुचिसंज्ञे स्यान्मासे शैलान्तरेऽपि च ॥ १६७ ॥

आचष्टे वैजयन्त्यां तं विद्वान् मलयभूधरे ।
पालाशे व्रतिनां दण्डेऽप्यथालीढं नपुसकम् ॥ १६८ ॥

धानुष्कस्थितिभेदे स्यात् तस्योक्तं चापि लक्षणम् ।
वाममाकुञ्च्य चरण दक्षिणे प्रततेऽग्रत· ॥ १६९ ॥

इत्येवमास्वादने च त्रिषु त्वास्वादिते भवेत् ।
आढकोऽस्त्री चतुष्प्रस्थपरिमाणे स्त्रियां पुनः ॥ १७० ॥

आढकी तुवरीसंज्ञधान्ये स्यात् त्वाश्रमोऽस्त्रियाम् ।
मुनिस्थाने ब्रह्मचर्यगार्हस्थ्यादौ मठेऽपि च ॥ १७१ ॥

आश्रवोऽङ्गीकृतौ पुंसि त्रि तु स्याद् वचनस्थिते ।
आग्नेयः पुंस्यगस्त्यर्षौ द्वापराख्ययुगेऽपि च ॥ १७२ ॥

संवत्सरे च क्लीबं तु रुधिरेऽप्युत्तरायणे ।
दशाहकार्यश्राद्धे च त्रेतायां तु युगे स्त्रियाम् ॥ १७३ ॥

आग्नेयी मेघवत् त्वाग्निसम्बन्ध्यर्थे स्त्रियां पुनः ।
रजस्वलायामात्रेयी नदीभेदे च कीर्तिता ॥ १७४ ॥

क्लीं तु सामविशेषे स्याद् द्वयोस्त्वत्रेरपत्यके ।
अबहुत्वेव धातौ तु शारीरे रससंज्ञके ॥ १७५ ॥

ज्ञेयोऽभिनवभृत्पात्रे प्रीतेऽप्याख्यातमित्यदः ।
क्लीबं तिङन्ते त्रिस्तूक्तेऽथाचितं स्यान्नपुंसकम् ॥ १९९ ॥

तुलाविंशतिरूपाणां भाराणां दशके स्मृतम् ।
ना तु शाकटभारे स्यान्निश्चिते त्वभिधेयवत् ॥ २०० ॥

स्यादातिथ्यमातिथ्यर्थे त्रि॰ पुमांस्त्वतिथौ मत. ।
आचार्य उपनीत्यादिकारिणि स्यान्नृलिङ्गक ॥ २०१ ॥

मन्त्रव्याख्याकृतीत्येक आचार्या तु स्त्रियामियम् ।
स्वतो या स्यादुपाध्याया तस्यां भार्या तु या भवेत् ॥ २०२ ॥

आचार्यस्य भवेत् तस्यामाचार्यानी स्त्रिया पुन ।
ज्ञेया यवाग्वामाश्राणा पक्वे त्वन्यत्र भेद्यवत् ॥ २०३ ॥

क्षीरार्थं हविषश्चापि स्यादथो आशरो द्वयो ।
राक्षसे शरसम्बन्धहीनसम्बन्धिनि त्रिषु ॥ २०४ ॥

आशिरस्तु पुमान् विष्णौ सूर्ये वह्नौ च भोजने ।
तथा क्षीरविकारे स्यादथ बह्वाशिनि त्रिषु ॥ २०५ ॥

*'नाशिरं दुह' इत्यत्र चिन्त्योऽर्थोऽथाशुगः पुमान् ।
अर्के वायौ शरे त्रिस्तु शीघ्रगेऽथ नृलिङ्गकः ॥ २०६ ॥

आलिङ्गो वाद्यभेदे स्यादित्यूचे शाकटायन॰ ।
आलिङ्गने च त्रिषु तु स्यादलिङ्गस्य योगिनि ॥ २०७ ॥

आलिङ्ग्यः पटहे पुंसि मध्यमे भेद्यवत् पुनः ।
आलिङ्गनीये विज्ञेय आज्ञनः पुनरुच्यते ॥ २०८ ॥

---

१. 'ज्यद्धविषश्चापि' ग. पाठ॰.

---

* अयं च प्रयोगः ऋग्वेदे ३. [illegible] मन्त्रे दृश्यते । तत्र आशिर
सोममिश्रणयोग्य पय इति तद्भाष्ये

पुंसि सप्तदशारत्नेर्यूपस्य स्याच्चतुर्थके।
आदितः स्यादरत्नौ च तथा चाञ्जन एव च॥ २०९॥

त्रिषु त्वञ्जनसम्बन्धिन्यथ स्त्री मत्तवारणे।
आलम्बमालम्बने तु पुंस्यालस्यं तु नप्यदः॥ २१०॥

अलसत्वेऽलसे तु त्रिराचारस्तु पुमानयम्।
चारित्रे स्त्री तु शक्तीनां नवानां शार्ङ्गिणः क्वचित्॥ २११॥

शक्तौ तदा स्यादाचारा स्यादासारस्तु पुंस्ययम्।
सार्थे स्याद् वेगवद्वर्षे नृपाणां च सुहृद्बले॥ २१२॥

सैनिकानां प्रसरणे प्रसृतौ च स्त्रियां पुनः।
आसारी स्यात् स्थलेऽथ स्यादाश्विको नरालिङ्गकः॥ २१३॥

व्याधौ दीव्यति तु त्रि स्यादक्षैरादित्यवान् तु ना।
त्रिविक्रमावतारे स्याद् विष्णोश्च द्वादशस्वपि॥ २१४॥

देवतागणभेदस्थेष्वर्के देवे तु स द्वयोः।
अदित्यादित्ययोः पुत्रेऽप्येष तु स्यात् त्रिषु स्मृतः॥ २१५॥

अदित्यादित्यसम्बन्धिन्यथ स्त्री रजसि स्मृतम्।
आभीलं स्त्री भवेत् कष्टे त्रि तु तद्वति भीकरे॥ २१६॥

आग्नीध्रस्तु पुमानृत्विग्विशेषेऽथ नपुंसकम्।
अग्निधिष्ण्यविशेषे स्यादाग्नीध्री तु स्त्रियामियम्॥ २१७॥

अग्निकार्येऽथ पुंसि स्यादाह्निको ग्रन्थकारिणाम्।
प्रपाठकाख्ये ग्रन्थस्यावच्छेदे भेदवत् पुनः॥ २१८॥

अहर्निर्वृत्तकादौ स्यात् स्त्री तु नित्यक्रियाशने।
इत्याह रभसः प्राज्ञ आधेयं तु नपुंसकम्॥ २१९॥

अग्न्याधाने निधेये तु त्रिराधारधृतेऽपि च।
आदेशके त्रिरादेष्टा नाऽन्यरयतिनि स्मृतः॥ २२०॥

---

१. 'ध्रे' ग. पाठः।

आत्माशी तु द्वयोर्मत्स्ये त्रि तु स्यादात्मभक्षिणि ।
इल्वका मृगशीर्षाख्यनक्षत्रे स्त्री तया युते ॥ २२१ ॥
कालमात्रे च नप् त्वेतत् सामभेदेषु केषुचित् ।
व्यापके तु त्र्यथ द्वे स्यादिल्वलो मत्स्यरक्षसो ॥ २२२ ॥
यूपे तु पुसीत्यपरे भ्रान्तिमूलास्तु केचन ।
मृगशीर्षाख्यनक्षत्रशिरोदेशस्थितोडुषु ॥ २२३ ॥
इल्वला स्त्रिय इत्येवमभाषिषत तन्मृषा ।
इष्वासो न स्त्रिया चापे नप् त्विषोरसने त्रि तु ॥ २२४ ॥
इषो क्षेप्तर्यथ पुमानिषिरो जातवेदसि ।
ऐषिराख्यस्य साम्नश्च द्रष्टरि स्यादिषावपि ॥ २२५ ॥
तृणे तु स्त्री त्रिषु पुनरीरिणं शून्य ऊषरे ।
क्लीब तु केचिन्मन्यन्ते क्लीर दुर्गे वनेऽपि च ॥ २२६ ॥
इत्वरं गत्वरे त्रि स्यात् पुंश्चल्या त्वित्वरी स्त्रियाम् ।
इषीकास्तु नृभिम स्युर्दक्षिणापथवर्तिनि ॥ २२७ ॥
नीवृद्भेदे तृणस्तम्बे तूलिकाया त्विय स्त्रियाम् ।
इषीका तृणजातौ तु शाकटायन उक्तवान् ॥ २२८ ॥
हलायुधस्य स्खलनमिषीका काश इत्यद ।
इङ्गुदी तापसतरौ स्त्रिया पुंसि च भाषित ॥ २२९ ॥
ज्योतिष्मत्या स्त्रियामेव स्यादिक्ष्वाकुः पुनर्नरि ।
वैवस्वतमनो पुत्रे राजन्ये मदनद्रुमे ॥ २३० ॥
तिक्तालाब्वा पुन स्त्री स्यादिरावांस्त्विरया युते ।
मेयलिङ्गो नदीमात्रे पुन स्त्री स्यादिरावती ॥ २३१ ॥
वाहीकदेशप्रथितनदीभेदेऽप्यथ स्त्रियाम् ।
ईषिका हस्तिनो नेत्रकूटे स्याद् मेयवत् पुन ॥ २३२ ॥

---

१ 'षि' क. ख द पाठ. २. 'त्तिरावा पु' ग पाठ.

ईर्षको गन्धर्हिसित्रोर्द्रष्टरि स्यात् तु मन्मथे ।
ईश्वरो ना महादेवे स्यात् तथा शण्डगोपतौ ॥ २३३ ॥
त्रिरतु स्वामिनि तत्रापि यदा स्यर्थस्तदेश्वरा ।
पार्वत्यां तु स्त्रियां विद्याद् द्वे रूपे ईश्वरीश्वरा ॥ २३४ ॥
ईशानो ना महादेवे पार्वत्यां त्वाह यादवः ।
ईशानीति स्त्रियां त्रिषु प्रभौ तत्र यदा स्त्रियाम् ॥ २३५ ॥
ईशाने²ति तदा भाव्यमिति शाब्दिकनिश्चयः ।
उत्सेधो मकुटच्छत्रध्वजोष्णीषतनूषु ना ॥ २३६ ॥
'प्रसोमदेव'वर्गस्य चतुर्थे सान्नि चोन्नतौ ।
अत्र तुच्छात्ममाचष्टे रभसः स्वमनीषया ॥ २३७ ॥
नृशण्डलिङ्गमुच्छ्राये शरीरे तु नपुंसकम् ।
उत्पलं त्वस्त्रिया केचिद् विदुः कुवलयेऽथ नप् ॥ २३८ ॥
कुष्ठाख्यभेषजेऽथ स्यादुपरः पुंसि वारिदे ।
यूपस्य त्वक्षते मूले क्ली स्त्री स्यादुपरा दिशि ॥ २३९ ॥
उपलस्तु पुमान् मेघे पाषाणे पुन्नपुंसकम् ।
मणौ च शर्करायां तु दृषत्पुत्रेऽपि च स्त्रियाम् ॥ २४० ॥
उपला सज्जनस्त्वाह त्रिषि चाथो(पलोलियो³)ः स्त्रियाम् ।
आदिसर्गस्थभूतानामन्नभेदे नरि स्वतः ॥ २४१ ॥
गुल्मिन्यां सलिले काष्ठेऽप्यूर्ध्व इलाह्वये पुन ।
स्तम्बभेदे कलापाख्यमुले शिष्यान्तरे च ना ॥ २४२ ॥
हलायुधेन तूक्तं यदुलपा बल्वजा इति ।
तत्प्रमादकृत विद्यादुडुपं तु प्लवे नपि ॥ २४३ ॥

---

१. 'दि' क. पाठः. २. 'नी' ख. पाठः. ३ 'पला व' ख. ग. पाठः.

---

† 'चन्द्रे पुंस्युलपो न स्त्री गुल्मिन्या ना तृणान्तरे' इति मेदिनी ।

ना चन्द्रेऽप्योटजोऽस्त्री स्यादृषीणां पर्णवेश्मनि ।
गृहमात्रेऽप्यु(दिं ? द्र)ञ्चन्तु पुमान् वादनदण्डके ॥ २४४ ॥
कोणास्थे परपुष्टे तु द्वे उदात्त तु पुंन्ययम् ।
उच्चैःस्वरे तद्वति तु महात्मनि च भेयवत् ॥ २४५ ॥
उद्भ्रान्तो निर्मदगजे पुमानुच्छर्दिते त्रिषु ।
उद्भिदं कृप्यलवणे क्लीबं ना तु जलोद्गमे ॥ २४६ ॥
कूपादेस्त्रिषु तूद्भिज्जे तरुगुल्मादिवस्तुनि ।
उल्मुकं स्यादलाते क्ली पूर्वराजान्तरं तु ना ॥ २४७ ॥
उत्तंसस्तु नृशण्डे स्यात् कर्णपूरेऽपि शेखरे ।
उत्तरं प्रतिवाक्ये क्ली त्रिस्तूर्ध्वोदीच्ययोस्तथा ॥ २४८ ॥
श्रेष्ठे चाप्यजयस्त्वाह परे चैतत् स्त्रियां पुनः ।
कौबेर्यां दिशि ना तु स्यात्त्रिमादुत्तारणे तथा ॥ २४९ ॥
उत्तमस्तु विभक्तीनां पाश्चात्यत्रितये त्रि तु ।
उत्कृष्टे दुग्धिकायां तु स्त्रियां स्यादुत्तमाथ ना ॥ २५० ॥
उद्घनो यत्र निक्षिप्य काष्ठे काष्ठस्य तक्षणम् ।
तत्रोद्धतघनादौ तु त्रिरुद्धया तु सा स्त्रियाम् ॥ २५१ ॥
ऋतुमत्यां प्रियाचारशूद्रे तु स पुमान् मतः ।
उदकार्हे पुनस्त्रि स्यात् तथैवोदकसाधुनि ॥ २५२ ॥
उपस्थोऽस्त्री भगे मेढ्रेऽप्युत्सङ्गेऽप्यौरसे पुनः ।
उरस्यो द्वे सुते ना तु स्तने त्रिस्तूरसा सह ॥ २५३ ॥
एकादिके तत्र साधावुरोभव उरोहिते ।
उचितं तु स्वभावे क्ली निश्चिताभ्यस्तयोः पुनः ॥ २५४ ॥
त्रिर्युक्तेऽनुमते चाथ प्रोक्तवाञ्छाकटायनः ।
योग्ये चिरानुयाते चेत्यथोद्यानं नपुंसकम् ॥ २५५ ॥

---

१. 'टि' क. ख. ग पाठः. २. 'परपुष्पस्तु' ग. पाठः.

चुल्ल्यामुद्गमने च त्रि॰ पुनः स्यादुद्गते तथा ।
उष्णीषमस्त्री मकुटे शिरोवेष्टेऽप्यथ द्वयोः ॥ २५६ ॥
उच्छ्रीतापिट्टिभे स्वप्ने पुनर्नाथोपबर्हणे ।
उच्छीर्षं क्ली त्रिषु पुनरुन्मूर्धनि पुमान् पुनः ॥ २५७ ॥
उदारः काककङ्गौ स्यात् त्रिस्त्वग्राम्यमहात्मनोः ।
दानशौण्डेषु चैतेषु स्त्र्यर्थे वृत्तिर्यदा तदा ॥ २५८ ॥
उदारा चाप्युदारी चेत्येवं रूपद्वयं भवेत् ।
उदरं तु न ना ज्ञेयं जठरे क्ली तु संयुगे ॥ २५९ ॥
उद्दामो वरुणे पुंसि त्रिषु तु स्याद् विशृङ्खले ।
उल्लोलः पुंसि कल्लोले भृशलोले तु भेद्यवत् ॥ २६० ॥
उन्मत्तः पुंसि धुर्धूरे तत्फले क्ली त्रिषु स्वयम् ।
उन्माद(स्त्रिषु ?वति) पूगस्य पुनः क्लीव फले भवेत् ॥ २६१ ॥
उद्वेगमिति सिंहोक्तं वैजयन्त्यां तु खण्डिते ।
पूगस्य फल इत्युक्तं पुमांस्तूद्वेजने त्रि तु ॥ २६२ ॥
भवेदुद्गतवेगादावुष्णिका तु स्त्रियानियम् ।
यवाग्वामुष्णकस्तु त्रिर्दक्षे क्लीव तु चेतसि ॥ २६३ ॥
उच्चलं चापभेदे च त्रिषु तूच्चलितर्यदः ।
उद्धर्षस्तु महे पुंसि त्रिषु तूत्कटहर्षके ॥ २६४ ॥
उन्मदस्तु पुमान्छूर्पे कच्छपे तु द्वयोरयम् ।
उत्सृष्टस्त्रिषु दत्ते स्यात् त्यक्ते चाथ नृलिङ्गकः ॥ २६५ ॥
शाकजातिविशेषस्य मारिषाख्यस्य भेदके ।
देवमारिषसंज्ञेऽथो उन्माथः पाशयन्त्रके ॥ २६६ ॥
ना हिंसायामथोन्मार्गे त्रिः क्लैवे चाजयोऽब्रवीत् ।
उत्साहोऽध्यवसाये ना सूत्रे च रभसोऽब्रवीत् ॥ २६७ ॥

---

१. 'च्छ्रि' क ङ. पाठः. २. 'श' क ग. ङ पाठः. ३ 'गे स्यात् पु' ख. पाठ. 'घु' ख. ग. ङ. पाठः. ५. 'हो व्यव' क. ख ग. पाठः

उत्साहा तु स्त्रियामुक्ता वैजयन्त्यां मनीषिणा ।
आरकूटाह्वये लोहभेदेऽथोत्कीर्णे इत्ययम् ॥ २६८ ॥
जलाशयविशेषे ना पुरीसंज्ञेऽथ स त्रिषु ।
भवेदुल्लिखितेऽथायम्(?)उपेन्द्रस्तु पुमानयम् ॥ २६९ ॥
विष्णावुपगते त्विन्द्र त्रिरथो उच्छुनः पुमान् ।
वैशाखमासे त्रिषु तु स्यादुद्धतशुनादिके ॥ २७० ॥
उद्गता विषमे वृत्तविशेषे स्त्री त्रि तूत्सवे ।
उत्पिचो द्वे चकोराख्यपक्षिण्युत्पातरि त्रिषु ॥ २७१ ॥
उत्करस्तु पुमान् पुञ्जे यज्ञभूमेश्च कुत्रचित् ।
प्रदेशभेदे त्रिषु तु स्यादुद्धतकरादिके ॥ २७२ ॥
उत्कटं तु भवेत् क्लीब योगिनामासनान्तरे ।
उद्भटक्षीबयोस्तु त्रिरुदीच्यं तु नपुंसकम् ॥ २७३ ॥
ह्रीबेरे त्रिः पुनरुद्गमवादी स्यात् पुमान् पुनः ।
उल्लम्बने स्यादुद्भन्धो मर्त्यजात्यन्तरे पुनः ॥ २७४ ॥
खनकात् क्षत्रियाजाते[1] द्वे उत्तप्तं तु नप्यदः ।
शुष्कमांसे त्रिषु पुनस्तप्ते दीप्तेऽप्यथो पुमान् ॥ २७५ ॥
उर्वारुश्चिर्भिटे स्त्री तु कर्कट्यामेतयोः पुनः ।
फले क्लीबमथोद्गाता पुमान् स्यादृत्विगन्तरे ॥ २७६ ॥
उच्चैर्गातरि तु त्रि स्यादुन्नेता त्वृत्विगन्तरे ।
पुमानुन्नायके तु त्रिरुह्हितर्यप्यथो पुमान् ॥ २७७ ॥
उदर्चिदग्नौ त्रि पुनरुद्गतार्चिष्यथो नपि ।
ऊर्दरं स्यादावपने भेषलिङ्गं तु दुर्बले ॥ २७८ ॥

---

१. 'त्यम्' क. पाठः.　२. 'र्या' क. पाठः.　३. 'ल' ख. पाठः.

---

† 'उद्बन्धे खनकाच्छूद्रा' (पृ. ७०. श्लो. ४१) इति तु वैजयन्ती ।

ऊधस्यं तु नपि क्षीरे त्रिपु तूधोभवादिके ।
ऊरव्यस्तु द्वयोर्वैश्ये त्रिपु तूरुभवे भवेत् ॥ २७९ ॥
ऊरुजस्तु द्वयोर्वैश्य ऊरुजाते पुनस्त्रिपु ।
ऊपणो ना कटुरसे विज्ञेयस्त्रि तु तद्वति ॥ २८० ॥
क्लीबं तु मरिचे शुण्ठावूषणाख्ये च कर्मणि ।
पिप्पल्या तूषणा स्त्री स्यादूर्णायुस्तु द्वयोः क्रिमौ ॥ २८१ ॥
मेषाख्यपशुजातौ स्यात्रा तु तल्लोमनिर्मिते ।
कम्बले क्षीणभङ्गे[1] च रभसः प्रोक्तवानमुम् ॥ २८२ ॥
वेदकीर्तितगन्धर्वभेदेऽथोर्जस्वति त्रिपु ।
ऊर्जस्वत् स्त्री तु नद्यां स्यादूर्जस्वत्यथ ना भवेत् ॥ २८३ ॥
ऋषभो वृषभे कर्णरन्ध्रे नक्रस्य पुच्छके ।
स्वराणामपि सप्तानां षड्जादीनां कचित् स्वरे ॥ २८४ ॥
एकाहक्रतुभेदे च सामभेदेषु केपुचित् ।
अर्हत्तीर्थकराणां च कस्मिंश्चिन्मत्तहस्तिनि ॥ २८५ ॥
शृङ्गिसंज्ञे च भैषज्ये केचिच्छ्रेष्ठेऽपि मन्वते ।
अन्ये शब्दात् परः श्रेष्ठ इत्यूचू रभसः पुनः ॥ २८६ ॥
वराहपुच्छे च स्त्री तु नराकारस्त्रियां भवेत् ।
ऋषभा शूकशिम्ब्यां च रभसेन प्रकीर्तिता ॥ २८७ ॥
क्लीबे स्वृजीकं वज्रे स्यादृषिभेदे परे नरि ।
एधितं तु वने क्लीबलिङ्गमौणादिका विदुः ॥ २८८ ॥
ना स्यौद् गिरिसरिद्ग्राहेऽथैकाङ्गो ना बुधग्रहे ।
त्रिस्त्वेकावयवे काणे त्वेकाक्षो मेघलिङ्गकः ॥ २८९ ॥

---

१. 'र्यौ गि' क. पाठः.

---

[1] 'ऊर्णायुर्ना क्षीणभङ्गे मेषकम्बललोमयोः' इति मेदिनी ।

श्रुतौ च स्त्री तु कल्याणी क्षमागिरिजयोस्त्रि तु ।
शुभयुक्ते शाश्वतस्तु बदत्यक्षयमात्रके ॥ ३०२ ॥
एतयोरर्थयोः स्त्रीत्वे यदा वृत्तिस्तदा द्वयम् ।
कल्याणा चापि कल्याणीत्यथ पुंसि चिरन्तने ॥ ३०३ ॥
कश्चिदाङ्गिरसे मर्त्ये कलापस्तु पुमानयम् ।
काञ्चीतूणीसमूहेषु भूषणे बर्हिबर्हके ॥ ३०४ ॥
कलापी तु स्त्रियामेषा कणिशेऽन्यस्तु कश्चन ।
भूते कणिशपूलेऽथ कनकः पुंसि चम्पके ॥ ३०५ ॥
नागकेसरधुर्धूरकिंशुकेषु बृहस्पतौ ।
क्लीबं तु काञ्चनेऽत्रोक्तवृक्षाणां फलपुष्पयोः ॥ ३०६ ॥
कपिलस्त्वृषिभेदेऽग्नौ ना कडाराख्यवर्णके ।
तुरुष्काख्ये च निर्यासे बभ्रुवर्णे कवुत्मति ॥ ३०७ ॥
कडारवर्णयुक्ते तु त्रि स्त्री तु कपिला द्रुमे ।
शिंशपासंज्ञके बभ्रुवर्णाया सुरभावपि ॥ ३०८ ॥
ब्रह्मरीतिसमाख्ये च लोहभेदे जलौकमाम् ।
जातिभेदे द्वादशानां तस्योक्त लक्षणं यथा ॥ ३०९ ॥
मनःशिलारञ्जिताभ्यां पार्श्वाभ्यामिव लक्षिता ।
पृष्ठे स्निग्धा मुद्गवर्णैस्त्र्यमिश्रिमासिहस्तिनः ॥ ३१० ॥
करिण्यां विद्युति तथा हरेण्वाख्ये च भेषजे ।
द्वयोस्तु शुनि ना तु स्यात् कपिशः श्यावसंज्ञके ॥ ३११ ॥
वर्णे तद्वति तु त्रिः क्ली मध्वासव इति श्रुते ।
मद्यभेदेऽथ कलशः कुम्भे स्त्रिद्वयान्वितः ॥ ३१२ ॥
स्थाल्यां तु दधिमन्थन्यां कलशी स्त्रीति केचन ।
द्रोणाख्यपरिमाणे तु पुमानथ करीरवाक् ॥ ३१३ ॥

---

१. 'दते' ड, 'मते' क. पाठः. २. 'णे' क. ग. ड पाठः. ३. 'त' च. ग. ड. पाठः.
४. 'त्व' ग. पाठः.

वंशाङ्कुरे घटे चापि कुकरार्ये च पादपे ।
करीरी तु स्त्रियां हस्तिदन्तमूलेऽत्र भेदवत् ॥ २१४ ॥

करिणं प्रेरयितरि करकस्तु पुमानयम् ।
कमण्डलौ च कर्कर्यां शण्ड त्वप्याह कश्चन ॥ २१५ ॥

करङ्के तु पुमानाम्रे दाडिमेऽप्येतयोस्तु नपुं ।
फले स्त्रीपुंसयोस्तु स्यात् करका जलदोपले ॥ २१६ ॥

द्वयोस्तु पक्षिभेदे स्यादित्याह रभस कवि ।
कटकस्त्वस्त्रियां शैलनितम्बे वलयेऽपि च ॥ २१७ ॥

सैन्ये च राजधान्यां चामरदत्तस्तु पुंस्यमुम् ।
हस्तमुद्राविभाषिष्ट स्त्रियां तु कटिका कृते ॥ २१८ ॥

सूत्रस्यूतशलाकाभिरायुधस्य निवारणे ।
परिमण्डलसंस्थानद्रव्येऽथो कण्टकोऽस्त्रियाम् ॥ २१९ ॥

वृक्षस्यावयवे सूचिसदृशे क्षुद्रविद्विषि ।
रोमाञ्चे वेणुवृक्षे च कण्टका तु स्त्रियामियम् ॥ २२० ॥

कण्टकार्ये क्षीरभेदे मनुनाम्नस्तु कण्टिका* ।
कर्कटो द्वे कुलीरे स्यात् [illegible] च पक्षिणि ॥ २२१ ॥

ना तु राशौ चतुर्थे स्यात् [illegible]वयवान्तरे ।
आरोहार्यैस्तु [illegible] स्यात् कर्कशस्तु त्रिषु स्मृत ॥ २२२ ॥

कठिने मखरस्पर्श निर्दये साहसप्रिये ।
ना तु खड्गे तथान्ये च [illegible] ॥ २२३ ॥

पटोलसज्ञ[illegible] च स्याद्[illegible] चाथ कर्कशा ।
स्त्रियां स्याद् बदरीभेदे नरकोन्मत्ति [illegible] ॥ २२४ ॥

कर्करस्तु पुमानस्मि पाषाणे दर्पणेऽपि च ।
दृढे तु भेदलिङ्ग स्यान्[illegible] कर्करा ॥ २२५ ॥

१. '[illegible]' ग पाठ. २. '[illegible]' ग पा. ३. '[illegible] तु' क ग पा. ग ङ पाठ. ४. '[illegible]' ग पा.

* [illegible] ।

स्त्रियां स्यात् करकेऽथ क्ली कङ्कणं करभूषणे।
तथा भूषणमात्रे च सूत्रे त्वजय उक्तवान्॥ ३२६॥
कङ्कणी तु स्त्रियां क्षुद्रघण्टायामथ कङ्कतः।
केशमार्जनकद्रव्ये त्रयी द्वे काकजातिषु॥ ३२७॥
चतसृष्वेकजातौ स्यात् कमलं तु नपुंसकम्।
पद्मे रक्ताम्बुजे तोये सौणेये छुरिकादिनः॥ ३२८॥
हेमाद्यैश्चित्रिते चर्मण्यथ स्त्री कमला श्रियाम्।
मृगे तु द्वे कश्मलं तु क्लीवं मोहपुरीषयोः॥ ३२९॥
मलीमसे तु त्रिः क्ली तु कललं चर्मकोशके।
अस्थन्यप्यथ न स्त्री स्याद् रेतसो गर्भतां यतः॥ ३३०॥
स्यादवस्थान्तरे सिंहवैजयन्त्यां तु पेठतुः।
उल्बेऽथ ताम्रकलशे किट्टे लोहमलेऽपि च॥ ३३१॥
कलिलं तु नपि ज्ञेय समूहे कायपापयोः।
गाम्भीर्ये सङ्कतेऽप्यात्माधिष्ठिते शुक्रशोणिते॥ ३३२॥
गहने तु त्रिषु ज्ञेय कलुषं तु नपि त्वघे।
सूक्ष्मैलायां तु कलुषी स्त्री त्रिषु त्वाविलद्रवे॥ ३३३॥
महिषे तु द्वयोर्ना तु कृष्णे वर्णेऽप्यकीर्तितः।
तद्युक्ते मेघवद्भो कल्माषः कृष्णपाण्डरे॥ ३३४॥
ना मिश्रवर्णेऽन्ये त्वाहुश्चित्रवर्णेऽथ मेचवत्।
वर्णयोरेतयोरेकवर्णयुक्ते नपि त्वदः॥ ३३५॥
आरण्यके सामभेदे 'कया नश्चित्र' इत्यृचि।
सर्पसामाह्वये गीते कालिङ्गस्तु नृपान्तरे॥ ३३६॥
नापत्येषु मनुष्यस्य भूम्नि चैषां च नीवृति।
द्वे तु धूम्याटसंज्ञे स्यात् पक्षिभेदेऽथ नपुंसियोः॥ ३३७॥

---

१. 'त्रि' ग. पाठः।

कलिङ्गा कुटजाख्यस्य फले वृक्षस्य यत् पुन ।
दृश्यतेऽजयकोशेऽत्र कलिङ्गाख्ये पुंपस्थिते ॥ ३३८ ॥
तिक्तकेशर इत्येव[२] ताचिन्त्य कदली पुन ।
स्त्रिया स्यात् करिणा केतो चर्मयोनौ मृगान्तरे ॥ ३३९ ॥
तस्य लक्षणमप्युक्त मृगज्ञ पूर्वसूरिभि ।
कदली तु निले श्वेते मृदुरूक्षोच्चर्बुरै ॥ ३४० ॥
नीलाग्रै रोमभिर्युक्ता सा विंशत्यङ्गुलायता ।
इत्येव नृस्त्रियोस्तु स्यात् कदल कदलीति च ॥ ३४१ ॥
रम्भाया स्यात् त्रिलिङ्गया तु कन्दली नवपल्लवे ।
झाटभेदे कच्छरूढेऽनिनयोानिमृगान्तरे ॥ ३४२ ॥
तस्य लक्षणमप्युक्त मृगज्ञै पूर्वसूरिभि ।
कन्दली तु श्यामवर्णा हस्तायामा महोदरी ॥ ३४३ ॥
इत्येव रभसस्त्वाह त कल्पोपरागयो ।
स्त्रिया तु क्षणिका ज्ञेया विद्युति क्षणवत्तु यत् ॥ ३४४ ॥
तत्र त्रि क्षणमात्रावस्थायिवस्तुनि चाथ स ।
राजन्ये क्षत्रियो द्वे स्यात् तत्र योनियुते यदा ॥ ३४५ ॥
अर्थे वृत्तिस्तदा द्वे स्त क्षत्रिया क्षत्रियाण्यपि ।
पुंयोगात् तु स्त्रिया वृत्तौ क्षत्रियीत्यथ न स्त्रियाम् ॥ ३४६ ॥
कषायस्तुवराभिख्यरसे क्वाथरसे तथा ।
निर्यासे सौरभे च स्यादनुरागाङ्गरागयो ॥ ३४७ ॥
रागद्रव्ये रक्तवर्णे रक्तपीतद्वयात्मके ।
मिश्रवर्णे तथा क्रोधलोभादौ भेदवत् पुन ॥ ३४८ ॥
रक्तवर्णयुते रक्तपीतवर्णद्वयान्विते[३] ।
सुरभौ तुवराख्येन रसेन च समन्विते ॥ ३४९ ॥

---

'पु' ङ. पाठ. २ 'व' द ध ट पाठ ३ 'त्मके' क ग पाठ.

कपालोऽस्त्री क्वचित् स्त्री च कपालीति शिरोस्थनि ।
घटादिशकले केचित् पुनः शकलमात्रके ॥ ३९० ॥
कटाहो ना कर्णवति विशाले लोहभाजने ।
द्वीपभेदे च महिषे पुनर्द्वे अर्थ मेघवत् ॥ ३९१ ॥
करालो दन्तुरे तुङ्गे विशाले विकृतेऽपि च ।
फडारवर्णयुक्ते च कराली तु स्त्रियामियम् ॥ ३९२ ॥
अग्निजिह्वाविशेषे च दंष्ट्राभेदे च भोगिनः ।
पार्वत्यामपि ना तु स्यात् कालमाले गुणे तथा ॥ ३९३ ॥
कडार इति विख्याते चर्मकोशे तु नप्यदः ।
अविश्वास्योऽत्र रभसो वाक्यमेतदधीतवान् ॥ ३९४ ॥
कलहस्तु पुमान् खङ्गकोशे मण्डन एव च ।
क्लीबं युद्धे च रागे चेत्येवं चैतदसाम्प्रतम् ॥ ३९५ ॥
कडारं तु जले क्लीबं रूक्षताशूल्योस्तु ना ।
तथा कपिलवर्णे च तद्युक्ते स्वभिधेयवत् ॥ ३९६ ॥
विषमीभूतदशने निःसारेऽपि द्वयोः पुनः ।
आचष्टे रभसो दासे शब्दवेदथ नप्यदः ॥ ३९७ ॥
कण्डारं रक्तपद्मे स्याद् वर्णभेदे तु पुंस्ययम् ।
सितकाचरमिश्रे स्यात् त्रिस्तु तद्वति कः पुनः ॥ ३९८ ॥
काचरो वर्णभेदोऽयं कृष्णधूम्रलमिश्रकः ।
पुन्नपुंसकयोस्तु स्यात् सन्नाहे कवचं तथा ॥ ३९९ ॥
रभसस्त्वाह पटहे नान्दीवृक्षे च पुंस्ययम् ।
कर्मारस्तु पुमान् वेणावयस्कारे द्वयोरथ ॥ ३६० ॥
कङ्कारो ना गृहे गूढे मणौ कश्चिदथ त्रिषु ।
अशोभनेऽथ कचटं क्लीबमुच्छिष्टविस्मयोः ॥ ३६१ ॥

---

१. 'द्वा' ग. पाठः .

मर्त्यजात्यन्तरे तु द्वे पुल्कसीशूद्रसम्भवे ।
क्रकरस्तु करीरद्रौ दीनक्रकचयोश्च ना ॥ ३६२ ॥

द्वयोस्तु पक्षिभेदे स्यादेतद्रमसभाषितम् ।
करटस्तु पुमान् बिल्वे गजगण्डेऽप्यथाब्रवीत ॥ ३६३ ॥

रभसोऽमुं नवश्राद्धे शब्दवेदी द्वयोः पुनः ।
काके दुर्दुरूटे तु त्रिः कुङ्कुमे तु नपुंसकम् ॥ ३६४ ॥

करटा तु स्त्रियां दुःखदोह्याया गवि नप् पुनः ।
करोटं वस्त्रकोशे च कपाले शिरसस्तथा ॥ ३६५ ॥

द्वे तु भृत्ये घनाम्लायां स्थागुल्या स्यात् करोटिका ।
कर्पटो ना वर्णभेदे त्रिस्तु तद्वत्यथ द्वयोः ॥ ३६६ ॥

कितवेऽथ कपोतो ना वर्णभेदे त्रि तद्वति ।
द्वे तु पारावताभिख्यखगेऽन्यस्मिन्नपि क्वचित् ॥ ३६७ ॥

गृहप्रवेशनाय्यांम्ये पक्षिभेदेऽथ कर्परः ।
पुमान् घटादिशकले कपालाख्ये शिरोस्थनि ॥ ३६८ ॥

कटाहे शस्त्रभेदे च वृक्षस्यावयवान्तरे ।
रसाञ्जने तु स्त्रीलिङ्गा कर्परीति विदुर्बुधाः ॥ ३६९ ॥

कर्पूरोऽस्त्री चन्द्रसंज्ञगन्धद्रव्ये स्त्रियां पुनः ।
कर्पूरी नागवल्ल्याख्यवल्लीभेदेऽथ कर्बुरम् ॥ ३७० ॥

क्लीबं स्वर्णे हरिच्छुक्लमिश्रवर्णे तु पुंस्ययम् ।
सिंहस्तु चित्र इत्याह त्रि तु वर्णसमन्विते ॥ ३७१ ॥

तद्वर्णयुक्तसुरभौ पुनः स्त्री कर्बुरा तथा ।
जलौकाजातिभेदे च सविषे तस्य लक्षणम् ॥ ३७२ ॥

या छिन्नोन्नतकुक्षिः स्याद् वर्मिमत्स्यवदायता ।
सविषा कबुरा नामत्यथ स्यात् कच्छुरस्त्रिषु ॥ ३७३ ॥

---

१. 'वा' क. ड. पाठ. २. 'पि' क. पाठ.

पामाभिः संयुते जन्तौ कच्छुरा तु स्त्रियामियम् ।
शत्र्यामप्यात्मगुप्तायां यवासे कण्डुरस्तु ना ॥ ३७४ ॥
सूरणेऽथात्मगुप्तायां कण्डुरा स्त्री नृभूम्नि तु ।
कम्बोजा देशभेदे स्यात्ता तु स्यात् तस्य राजनि ॥ ३७५ ॥
द्वयोस्तु तदपत्ये स्याद् गजभेदे च ना पुनः ।
शङ्खेऽपि रभसेनोक्तः कपर्दस्तु पुमानयम् ॥ ३७६ ॥
महादेवजटाजूटे जटाजूट इतीतरे ।
जलजन्तुविशेषे तु वराटाख्ये द्वयोरथ ॥ ३७७ ॥
क्रमुको ना पूगवृक्षे पट्टिकाख्ये च पादपे ।
ब्रह्मदारुसमाख्ये च भद्रमुस्ते च नप् पुनः ॥ ३७८ ॥
एषां प्रसूने क्रमणं पुनर्विद्यान्नपुंसकम् ।
पादे क्रान्ते तथा द्वे तु तुरङ्गे कन्दरा पुनः ॥ ३७९ ॥
त्रयी गिरेरवयवे दरीसंज्ञे द्वयोः पुनः ।
स्यादुच्चजानुके भेदे मृगजातिरथो पुमान् ॥ ३८० ॥
कन्धरो वारिदे ग्रीवासिरयोस्तु स्त्रियामियम् ।
कन्धरा कथिता सद्भिः पुन्नपुंसकयोः पुनः ॥ ३८१ ॥
क्षुद्रग्रामे द्रोणमुखसंज्ञे कर्वट इत्ययम् ।
देशसन्धिषु संस्त्यायो यस्तस्मिन्निति शाकटः ॥ ३८२ ॥
कर्बरो नाङ्गलौ[1] देशे पापे च रभसोऽब्रवीत् ।
द्वयोस्तु रक्षसि व्याघ्रे क्लीबं तु जलकर्मणोः ॥ ३८३ ॥
सतृणाभ्यवहारी तु रभसः शबले त्रिषु ।
कर्बरी तु स्त्रियां भूमौ शिवायां चाथ कच्छपः ॥ ३८४ ॥
द्वे कूर्मे निधिभेदे तु पुंसि स्यात् स्त्री तु कच्छपी ।
वीणायां स्यात् सरस्वत्या ऋषिभेदे तु कश्यपः ॥ ३८५ ॥

---

1 'वु' ग. पाठः.

ना द्वे तु कच्छपे त्रिस्तु मद्यपे कम्बलस्तु ना ।
कस्मिंश्चित् पार्वतीभक्ते रभसस्तूक्तवानमुम् ॥ ३८६ ॥

उत्तरासङ्गमात्रे च सास्नाया च गवामथ ।
रभस सलिले क्लीब रल्लके तु त्रिलिङ्गकम् ॥ ३८७ ॥

कम्बली स्त्री तु विज्ञेया सज्जनाया च हस्तिन ।
कल्पना क्ली तु कल्पसौ स्याच्छेदने चाथ नपुंसियो ॥ ३८८ ॥

क्रियाया स्यात् कल्पयतेरथ स्यात् कर्पकः पुमान् ।
अङ्गारके कर्परि तु भेषवच्च कूपीचर्ले ॥ ३८९ ॥

ककुदोऽस्त्री बलीवर्दस्कन्धयोर्मध्य उन्नते ।
प्रधाने राजचिह्न च हस्तिनो मेढ एव च ॥ ३९० ॥

कठिनं तु कठोरे त्रिः कठिना तु स्त्रियामियम् ।
शुक्रधातुसमाख्ये स्यादित्याहुर्द्वपठन्तरे ॥ ३९१ ॥

रभसो गुडशर्करेत्यनुमर्थमभाषत ।
कमठः कच्छपे द्विः स्याद् वामने भेषलिङ्गकम् ॥ ३९२ ॥

कूर्मास्थनि तु ना क्ली तु भिक्षापात्रेऽथ करखटम् ।
कठिने त्रि. करखटी तु शुक्रधातुसमाख्यके ॥ ३९३ ॥

पाषाणभेदे स्त्री त्रिस्तु कनिष्ठोऽल्पतमेऽनुजे ।
तथा सुवतमे स्त्री तु कनिष्ठाल्पतमाङ्गुली ॥ ३९४ ॥

क्ली तु भूलवणे कृष्यसत्रेऽथ करजः पुमान् ।
नखे करञ्जवृक्षे च क्ली तु व्याघ्रनखाह्वये ॥ ३९५ ॥

भेषजे कञ्चुकस्त्वस्त्री कवचे वारबाणके ।
निर्मोके भोगिनश्चाह रभस शब्दवित्तम ॥ ३९६ ॥

---

१. 'ट ट' ग. पाठ. २. 'कं' क. ग ड पाठ.

वर्षापकगृहीताङ्गस्थितचक्षेऽप्यभाषत ।
कर्पीकं तु खनित्रे स्यात् क्लीबलिङ्गमथ स्त्रियाम् ॥ ३९७ ॥

मक्षिकायां कर्षीका स्यात् कर्णिका तु वनस्पतेः[3] ।
बीजे स्त्री स्यात् तथा भिन्नतण्डुलावयवेऽत्र तु ॥ ३९८ ॥

पुंस्याहार्ये हर्षनन्दी ना त्वेव पटवासके ।
कर्णिकोऽथ कबन्धोऽस्त्री क्रियायुक्तेऽपमूर्धके ॥ ३९९ ॥

शरीरे सलिले चापि रक्षोभेदे तु पुंस्ययम् ।
रभसस्तूदरे राहावपि भाषितवानमुम् ॥ ४०० ॥

करण्डो ना समुद्गे स्यात् पुटीसंज्ञे तु भाजने ।
स्त्री करण्डी द्वयोस्तु स्यात् पक्षिभेदेऽथ ना स्मृतः ॥ ४०१ ॥

कदम्बो व्यञ्जनीभूतशाकनाले द्रुमान्तरे ।
क्ली तु तत्प्रसवेऽथो ना कलम्बः शाकनालके ॥ ४०२ ॥

बाणे चाथ कलम्बोऽस्त्री शतपर्व[4]समाख्यके ।
स्तम्बे[5] शाके कर्दम्बस्तु सर्षपे ना च नीपके ॥ ४०३ ॥

क्लीबं तु प्रसवे तस्य समूहे चाथ ना स्मृतः ।
करम्बः सेकमिश्रान्ने मिश्रमात्रे तु भेद्यवत् ॥ ४०४ ॥

केचित् तु पुष्पे क्लीत्याहुः कवरस्तु नृलिङ्गकः ।
लवणे[8]ऽ(म्ले) * च रसयोर्भेद्यलिङ्गस्तु तद्वतोः ॥ ४०५ ॥

केशविन्यासभेदे तु कवरी स्त्री तथैव सा ।
बाष्पिकासंज्ञभैषज्ये शाकेऽपि रभसोऽपठीत् ॥ ४०६ ॥

---

१. 'पि' ख. ङ. पाठः. २ 'र्णी' क. ख. घ. पाठः. ३. 'तौ' ग. पाठः. ४. 'र्वी' क. ख. ङ. पाठः. ५. 'म्बेऽशोके' ग. पाठः. ६. 'द' ग. पाठः. ७. 'द' ग. पाठः. ८. 'णे चरयो' क, 'णे वारसौधरयो' ख., 'णे चारसरयो' ङ. पाठः.

---

* 'कवरं लवणाम्लयोः' इति मेदिनी ।

व्याकीर्णमास्यकबरां कबरीमिति सत्कवेः ।
वाक्ये कबरशब्दस्य चिन्त्योऽर्थोऽथ करम्भवाक् ॥ ४०७ ॥
पुंसि स्याद् दधिमिश्रेषु सक्तुषु स्त्री पुनर्भवेत् ।
करम्भी पात्रभेदेऽथ करभो गर्दभे द्वयोः ॥ ४०८ ॥
उष्ट्रस्य च शिशौ पाणेर्मणिबन्धकनिष्ठयोः ।
मध्ये स्यात् कर्तनं तु स्त्री छेदने सूत्रसर्जने ॥ ४०९ ॥
अश्वस्य धूलिलुठने कर्तनी तु स्त्रियामियम् ।
नापितस्योपकरणे क(र्तृ ? र्त्रि)*काख्येऽथ नपुंस्त्रियोः ॥ ४१० ॥
कर्तना कर्तयत्यर्थे स्याद्यदं नपुंसकम् ।
करणं कारणे काये साधने कर्मणीन्द्रिये ॥ ४११ ॥
क्षेत्रेऽपि साधकतमे नाट्यगीतिप्रभेदयोः ।
रतिबन्धे तथा ज्योतिःशास्त्रज्ञानां च कुत्रचित् ॥ ४१२ ॥
ग्रहचारेक्षणोपायप्रभेदे च निरूप्यताम् ।
स्पृष्टाद्युच्चारणाभेदे योगिपद्मासनादिषु ॥ ४१३ ॥
मर्त्यजात्यन्तरे तु द्वे शूद्रायां वैश्यसम्भवे ।
करुणा तु स्त्रियां चित्तवृत्तौ क्लिष्टेषु जन्तुषु ॥ ४१४ ॥
धार्मिकस्य त्रिषु पुनः करुणाविषये तथा ।
तद्रूपे चाथ वदति हर्षनन्दी नपुंसकम् ॥ ४१५ ॥
दैन्ये करुणमित्येतन्ना तु च्छागाख्यपादपे ।
कर्मण्या तु भृतौ स्त्री स्यात् कर्मसाधौ तु मेघवत् ॥ ४१६ ॥
सम्पादिनि च विज्ञेयं कर्मणा स्यान्मनीषिभिः ।
कट्फलस्तु द्रुमे हैण्डुसंज्ञे ना द्वे खगान्तरे ॥ ४१७ ॥

---

१. 'थतश' क. ख. ङ. पाठः. २. 'य' क. ख. ग. पाठः. ३. 'स्व' ४. 'दु' ङ. पाठः.

---

* 'क्षुरोऽस्य वसन शस्त्र कर्त्रिका कर्तनी छुरी' (पृ. ११८. श्लो. २६) इति

कस्वरं तु धने क्लीबं त्रिः स्यात् कसनशीलके ।
कथेरः शकुनौ द्वे त्रिः कथके कुहकेऽपि च ॥ ४१८ ॥
कर्णीचिः स्त्री लतायां स्यान्मनस्यपि धनञ्जयः ।
अन्ये तु केचिद् भाषन्ते तुरङ्गे स्याद् द्वयोरिति ॥ ४१९ ॥
करेणुरिभ्यां स्त्री नेभे कर्णिकारद्रुमेऽपि च ।
कशिपुस्त्वस्त्रियामन्नवस्त्रयोस्तद्द्वयेऽपि च ॥ ४२० ॥
कुथे च वैजयन्ती तु शय्यायामिति भाषते ।
कठारस्तु द्वयोर्ज्ञेयः खङ्गे शिल्पिनि चाप्यथ ॥ ४२१ ॥
कर्करुः पुंसि कूश्माण्डे कालिङ्गे चानयोः पुनः ।
क्लीबं स्यात् प्रसवेऽथ स्यात् कर्कन्धूः पुंस्त्रियोरपि ॥ ४२२ ॥
बदर्यां क्रोष्टुबदर्यां व्रणविष्टम्भयोरपि ।
स्त्री तु मध्वाज्यससिक्तयवलाजजतर्पणे ॥ ४२३ ॥
रथादीनां युगे चाथ कफेन्दुः पुंसि पादपे ।
श्लेष्मातकसमाख्येऽथच्छादिषेयतृणे स्त्रियाम् ॥ ४२४ ॥
कशेरुः स्त्रीनपोः पृष्ठस्यास्थनि क्लीबकं पुनः ।
स्तम्बभेदे सजलपङ्करूढे कशेरुक ॥ ४२५ ॥
वेशावेदयाकर्णिकारे कशेरू रमनः स्त्रियाम् ।
कटपूर्णा महादेवे स्त्री तु खेलगतौ स्मृता ॥ ४२६ ॥
ककुद्मान् वृषभे पुंसि पण्डसंज्ञे च गोपतौ ।
ककुद्मती तु श्रोण्यां स्त्री कण्टकी तु पुमानयम् ॥ ४२७ ॥
अरिमेदाख्यवृक्षे च वृक्षे च मदनाह्वये ।
त्रि तु कण्टकसंयुक्ते कञ्चुकी तु द्वयोरहौ ॥ ४२८ ॥
सौविदल्ले तु ना त्रिस्तु कञ्चुकेन समन्विते ।
कलापी ना महादेवे पर्कट्याख्ये च पादपे ॥ ४२९ ॥

---

१. 'ध' क. पाठः. २ 'थ द्वयेऽपि' ग. पाठः. ३. 'ह' क. पाठः. ४. 'स्तम्भभेदे,च छ' ग. पाठः. ५. 'व' ग. पाठः. ६. 'ब' क. ङ. पाठः.

व्याकीर्णमाल्यकबरां कबरीमिति सत्कवेः ।
वाक्ये कबरशब्दस्य चिन्त्योऽर्थोऽथ करम्भवाक् ॥ ४०७ ॥
पुंसि स्याद् दधिमिश्रेषु सक्तुषु स्त्री पुनर्भवेत् ।
करम्भी पात्रभेदेऽथ करभो गर्दभे द्वयोः ॥ ४०८ ॥
उष्ट्रस्य च शिशौ पाणेर्मणिबन्धकनिष्ठयोः ।
मध्ये स्यात् कर्तनं तु क्ली छेदने सूत्रसर्जने ॥ ४०९ ॥
अश्वस्य धूलिलुठने कर्तनी तु स्त्रियामियम् ।
नापितस्योपकरणे क(र्तृ ? त्रि)*काख्येऽथ नपुंस्त्रियोः ॥ ४१० ॥
कर्तना कर्तयत्यर्थे स्यादर्थेदं नपुंसकम् ।
करणं कारणे काये साधने कर्मणीन्द्रिये ॥ ४११ ॥
क्षेत्रेऽपि साधकतमे नाट्यगीतिप्रभेदयोः ।
रसबन्धे तथा ज्योतिःशास्त्रज्ञानां च कुत्रचित् ॥ ४१२ ॥
ग्रहचारेक्षणोपायप्रभेदे च निरूप्यताम् ।
स्पृष्टाद्युच्चारणाभेदे योगिपद्मासनादिषु ॥ ४१३ ॥
मर्त्यजात्यन्तरे तु द्वे शूद्रायां वैश्यसम्भवे ।
करुणा तु स्त्रियां चित्तवृत्तौ क्लिष्टेषु जन्तुषु ॥ ४१४ ॥
धार्मिकस्य त्रिषु पुनः करुणाविषये तथा ।
रसरूपे चाथ वदति हर्षनन्दी नपुंसकम् ॥ ४१५ ॥
दैन्ये करुणमित्येतन्ना तु च्छागाख्यपादपे ।
कर्मण्या तु भृतौ स्त्री स्यात् कर्मसाधौ तु भेद्यवत् ॥ ४१६ ॥
सम्पादिनि च विज्ञेयं कर्मणा स्यान्मनीषिभिः ।
कदम्बस्तु द्रुमे टुण्डुसंज्ञे ना द्वे खगान्तरे ॥ ४१७ ॥

---

१. 'धतन्न' क ख. ड. पाठ. २. 'य' क. ख. ग. पाठः. ३. 'स्त' ट. च. पाठ. ४. 'दु' ट. पाठ.

---

* 'क्षुरोऽस्य वपन शस्त्रं कर्त्रिका कर्तनी क्षुरी' (पृ. १३८. श्लो. २९) इति वैजयन्ती ।

कस्वरं तु घने क्लीबं त्रिः स्यात् कसनशीलके।
कथेरः शकुनौ द्वे त्रिः कथके कुहकेऽपि च ॥ ४१८ ॥
कणीचिः स्त्री लतायां स्यान्मनस्यपि धनञ्जयः।
अन्ये तु केचिद् भाषन्ते तुरङ्गे स्याद् द्वयोरिति ॥ ४१९ ॥
करेणुरिभ्यां स्त्री नेभे कर्णिकारद्रुमेऽपि च।
कशिपुस्त्वस्त्रियामन्नवस्त्रयोस्तद्द्वयेऽपि च ॥ ४२० ॥
कुथे च वैजयन्ती तु शय्यायामिति भाषते।
कठारस्तु द्वयोर्ज्ञेयः खङ्गे शिल्पिनि चाप्यथ ॥ ४२१ ॥
कर्करुः पुंसि कूश्माण्डे कालिङ्गे चानयोः पुनः।
क्लीबं स्यात् फलेऽथ स्यात् कर्कन्धूः पुंस्त्रियोरपि ॥ ४२२ ॥
बदर्यां क्रोष्टुबदर्यां मणिविष्टम्भयोरपि।
स्त्री तु मध्वाज्यसंसिक्तयवलाजजतर्पणे ॥ ४२३ ॥
रथादीनां युगे चाथ कफेलूः पुंसि पादपे।
श्लेष्मातकसमाख्येऽथच्छादिपेयतृणे स्त्रियाम् ॥ ४२४ ॥
कशेरुः स्त्रीनपोः पृष्ठस्यास्थनि क्लीबकं पुनः।
स्तम्बप्रभेदे सजलपङ्करूढे कशेर्वथ ॥ ४२५ ॥
वैशावेद्याकर्णिकारे कशेरू रभनः स्त्रियाम्।
कटपूर्णा महादेवे स्त्री तु खेलगतौ स्मृता ॥ ४२६ ॥
ककुद्मान् वृषभे पुंसि पण्डसंज्ञे च गोपतौ।
ककुद्मती तु श्रोण्यां स्त्री कण्टकी तु पुमानयम् ॥ ४२७ ॥
अरिमेदाख्यवृक्षे च वृक्षे च मदनाह्वये।
त्रि तु कण्टकसंयुक्ते कञ्चुकी तु द्वयोरहौ ॥ ४२८ ॥
सौविदल्ले तु ना त्रिस्तु कञ्चुकेन समन्विते।
कलापी ना महादेवे पर्कट्याख्ये च पादपे ॥ ४२९ ॥

---

१. 'घ' क. पाठः. २. 'थ द्रुमेऽपि' ग. पाठः. ३. 'ह' क. पाठः. ४. 'स्तम्भेद,च घ' ग. पाठः. ५. 'व' ग. पाठः. ६. 'व' क. ङ. पाठः.

ज्ञेयश्च पर्कटी प्लक्षो द्वे मयूरे स्त्रियां पुनः ।
कलापिनी स्यात् पार्वत्यां कलापवति तु त्रिषु ॥ ४२० ॥

ककुदी तु पुमान् षण्डसंज्ञके गोपतौ त्रि तु ।
ककुदेन समायुक्ते काञ्चनं तु नपुंसकम् ॥ ४२१ ॥

हेम्न्यब्जकेसरे ना तु धुर्धूरे नागकेसरे ।
उदुम्बरे च रभसो हरिद्रायां तु काञ्चनी ॥ ४२२ ॥

ब्रह्मरीतिसमाख्ये च लोहभेदेऽस्त्रियामथ ।
विषप्रभेदे काकोलः पुन्नपुंसकयोः स्मृतः ॥ ४२३ ॥

द्वयोस्तु कृष्णकाके स्यात् काकोलीति स्त्रियामियम् ।
वयस्यासंज्ञके वल्लीजातिभेदेऽथ काहला ॥ ४२४ ॥

स्त्री वाद्यभेदे सुषिरे रथ्यावादे* तु नप्यदः ।
त्रि तु निष्ठुरवाक्ये स्यादाकुले चाथ न स्त्रियाम् ॥ ४२५ ॥

कान्तारः स्यान्महारण्ये दुर्गमार्गे च त पुनः ।
रभसो वनमात्रे च मोक्षवानथ पुंस्ययम् ॥ ४२६ ॥

इक्षुभेदेऽथ कादम्बः कलहंसे द्वयोरयम् ।
कदम्बसम्बन्धिनि तु त्रिषु स्यान्मार्गणे तु ना ॥ ४२७ ॥

काम्बोजी तु स्त्रियां माषपर्णीति प्रथितौषधी ।
ना तु पुन्नागवृक्षे च वलक्षखदिरे तथा ॥ ४२८ ॥

तद्देशसम्भवे तु स्याद् द्वयोरेष तुरङ्गमे ।
क्लीबं तु कारणं हेतौ रभसस्त्वभिधानवित् ॥ ४२९ ॥

करणेऽपि पठत्येनं[3] क्षीरपोस्त्वपि कारणा ।
क्रियायां स्यात् कारयतेर्घाते चेत्यजयोऽब्रवीत् ॥ ४४० ॥

---

१ 'ये' ग पाठः. २. 'त्रु' क. पाठ. ३. 'नन्' ख, 'तन्' ग. पाठः.

---

* 'रथ्यावादे तु कैहलम्' (पृ ३३. श्लो. २७) इति तु वैजयन्ती ।

कारणा तु स्त्रियां तीव्रवेदनायामथो नपि ।
कार्मुकं स्याद् धनुर्मात्रे धनुर्भेदे च ना पुनः ॥ ४४१ ॥
वेणौ त्रिस्तु प्रभवति कर्मणे तत्र वस्तु यत् ।
कावृकः कुकवाकौ द्वे पीतमस्तककोकयोः ॥ ४४२ ॥
त्रि तु स्याद् रभसेनोक्तः कार्मणः कर्मकारके ।
मन्त्रादियोजने[3] तु क्ली मूलकर्मेति तद् विदुः ॥ ४४३ ॥
कार्मिकस्तु भवेद् राज्ञां शुल्केष्वधिकृते त्रिषु ।
कर्मणां तु समूहे क्ली कातरस्त्वभिधेयवत् ॥ ४४४ ॥
भीरौ स्यात् पण्डके त्वेष पुमान् स्याद् मेघवत् पुनः ।
कालेयः कालसम्बन्धिन्यर्थे सर्वत्र नप् पुनः ॥ ४४५ ॥
कलिना साक्षि दृष्टे स्याद् कलीनां च कदम्बके ।
रागद्रव्ये जापकाख्ये दार्व्यां त्वेव पुमानयम् ॥ ४४६ ॥
दार्वी दारुहरिद्रोक्ता काकाण्डस्तु पुमानयम् ।
कृष्णशिम्बौ नपि त्वेतत् काकस्याण्डे पुमान् पुनः ॥ ४४७ ॥
क्षालनोऽरत्निके पष्ठे यस्य यूपस्य सप्त च ।
दश चारत्नयो मानं तस्य श्रीशण्डयोः पुनः ॥ ४४८ ॥
प्रक्षालनेऽथ कामाङ्गं चूतवृक्षे पुमानयम् ।
कामस्य पुनरङ्गे क्ली काश्यपस्तु पुमानयम् ॥ ४४९ ॥
ऋषिभेदे च चन्द्रे च स्यादिक्ष्वाकोः कुलस्य यः ।
*द्वितीयो नृपतिस्तत्र मरीचितनये स्मृतः ॥ ४५० ॥*
काश्यपस्य तु पुत्रे द्वे काश्यपीति स्त्रियां भुवि ।
क्ली तु मांसेऽथ काण्डीरस्त्रिषु काण्डवति स्मृतः ॥ ४५१ ॥
पुमांस्तु हस्तिपिप्पल्यां क्षारकस्तु नृशण्डयोः ।
पक्षिमत्स्यादिपिटके तथा स्यात् पुष्पजालके ॥ ४५२ ॥

---

१. 'का' - ख. ङ. पाठः. २. 'का' ख. पाठः. ३. 'के तु त्रि मू' ग. पाठः.
४. 'य' ग. पाठः.

क्षरिवृक्षारायेन्त्रोस्तु भेषवत् कासिका पुनः ।
स्त्री वनस्पतिभेदेऽन्ये छेदनद्रव्य ऊचिरे ॥ ४९३ ॥

त्रिस्तु कासयितर्येप कासकः कासितर्यपि ।
काचिकस्तु पुमाञ्ज्ञेयः कमुण्डे द्वे तु मूषिके ॥ ४९४ ॥

काकली तु कले सूक्ष्मे शब्दे स्त्री काकलं पुनः ।
ग्रीवाया उन्नते देशे स्त्री कण्ठमणिसंज्ञके ॥ ४९५ ॥

कारुजस्तु पुमाञ्ज्ञेयो वल्मीके कलहे तथा ।
चित्रे चित्रकराणां च त्रिः पुनः कारुसम्भवे ॥ ४९६ ॥

काश्मीरी कृष्णवर्णायां वचायां स्यात् स्त्रियामियम् ।
क्लीं तु पुष्करमूलाख्यभेषजे कुङ्कुमेऽपि च ॥ ४९७ ॥

त्रिः कश्मीरनिवासे च कश्मीराभिजनेऽपि च ।
काणकाक्षिपु हिंसे स्यात् क्लीबं स्वक्षिमले विदुः ॥ ४५८ ॥

कायस्थो लेखके त्रिः स्याच्छरीरस्थेऽप्यथ स्त्रियाम् ।
हरीतक्यामिदं चोक्तं रभसेनैव धीमता ॥ ४९९ ॥

कानीनः पुंसि कर्णे स्याद् व्यासे च रभसोऽपठीत् ।
द्वयोस्त्वपत्ये कन्याया लब्धे स्वेप त्रिषु स्मृतः ॥ ४६० ॥

कायिका तु स्त्रियां ज्ञेया प्रदेये स्याद् दिने दिने ।
ऋणवृद्धिविशेषेऽर्थे त्रिः कायकृतकर्मणि ॥ ४६१ ॥

कारिका स्त्री यातनायां स्यात्स्याश्लोके कृतावपि ।
क्रियानिर्वर्तके तु स्त्री कर्मादौ त्रिस्तु कर्तरि ॥ ४६२ ॥

हिंसके च स्वयं दृष्टे तृणवृद्धयन्तरे स्त्रियाम् ।
कारितापि च कारित्वे त्रिस्तु नि(र्वाःर्मा)पितेऽप्यथ ॥ ४६३ ॥

---

१. 'च' क. ख. ग. ड. पाठः. २. 'तद्वति' ड. पाठः.

म(सु!रौ)* रोगविशेषे ना कामुके त्रिषु कामलः ।
कालिका तु स्त्रियां मासि मासि देयेऽधमर्णकैः ॥ ४६४ ॥
ऋणवृद्धिविशेषे स्याद् मेघलिङ्गं तु यस्य वै ।
कालः प्राप्तः प्रकृष्टोऽस्ति तत्र तत्र च वर्तते ॥ ४६५ ॥
यदा स्त्रियां तदा रूपं कालिकेत्यथ कालिका ।
अङ्गारकसमाख्यस्य शकुनेर्योषिति स्त्रियाम् ॥ ४६६ ॥
कालिका त्विति सौराष्ट्रसंज्ञके भेषजे भवेत् ।
प्रशान्ताग्नौ दग्धकाष्ठे मृगभेदेऽस्य लक्षणम् ॥ ४६७ ॥
कालिका त्वसिता यद्वा कपोता पिङ्गबिन्दुका ।
इत्येवमविवाह्यानां कन्यानां कन्यकान्तरे ॥ ४६८ ॥
अस्योक्तं लक्षणं कुब्जा दुर्दर्शा कालिका च सा ।
अश्वस्य दन्तरेखायां सूक्ष्मजीरक एव च ॥ ४६९ ॥
मनोविकारप्रभवकायवैवर्ण्य एव च ।
मेघजाले च चिक्रोडसंज्ञप्राण्यन्तरेऽपि च ॥ ४७० ॥
क(व!म)†देयवस्तुमूल्ये[3] काश्च्यां च रभसोऽपठीत् ।
कालकस्तु पुमान् कायविकारे पिप्लुसंज्ञके ॥ ४७१ ॥
रक्ते तु कालद्रव्येण पटादौ मेघलिङ्गकः ।
कोपादिना च काले स्यान्मुखादौ कलितर्यपि ॥ ४७२ ॥
तथैव कालयितरि कार्त्तिकी तु स्त्रियामियम् ।
कृत्तिकाख्यर्क्षसंयुक्तपौर्णमास्यां पुमान् पुनः ॥ ४७३ ॥

---

१. 'शो' च पाठः. २. 'श' क, च, पाठः. ३. 'ले' ग, पाठः.

---

* 'कामला रोगभेदे वा ना ना मदवसन्तयोः' इति मेदिनी । † कालिका...
.........क्रमदेये वस्तुमूल्ये' इति मेदिनी, 'कालिका योगिनीभिद............क्रमदेयव-
स्तुमूल्ये' इति हेमचन्द्रश्च ।

कार्त्तिकी यत्र मासेऽस्ति तस्मिन्नथ नृलिङ्गकः ।
किष्किन्धः शैलभेदे स्यात् किष्किन्धा तु स्त्रियामियम् ॥ ४७४ ॥
धराधरविशेषस्थगुहाभेदे पुमान् पुनः ।
किञ्जल्कः केसरे क्ली तु स्यादाकाशे च लाञ्छने ॥ ४७५ ॥
इदं धनञ्जयेनोक्तं किरातस्त्वभिधेयवत् ।
स्वल्पकायेऽथ रभसो भूनिम्बे पुंस्यधीतवान् ॥ ४७६ ॥
स्त्रियां चामरवाहिन्यां मर्त्यजात्यन्तरे द्वयोः ।
शबरात् पर्णशबरी निष्टचपूर्वासविष्ट यम् ॥ ४७७ ॥
तत्र द्वे तु किराटः स्यान्म्लेच्छे वणिजे चाप्यथ ।
किर्म्मीरः स्यात् पुमान् रक्षोविशेषे चित्रवर्णके ॥ ४७८ ॥
त्रि तु तद्वर्णयुक्ते स्याद् विष्ठायां तु नपुंसकम् ।
किल्बिषं क्ली पापरुजोर्वेश्यायां किल्बिषी स्त्रियाम् ॥ ४७९ ॥
कितवः पुंसि धुर्धूरे क्ली तु तत्प्रसवे त्रि तु ।
द्यूतकारेऽथ रभसो मत्तवञ्चकयोरपि ॥ ४८० ॥
क्लीबलिङ्ग तु विज्ञेयं क्रिमिजं गन्धवस्तुनि ।
अगुर्वाख्ये क्रिमेस्तु स्याज्जाते त्रि किमिरस्तु ना ॥ ४८१ ॥
सितलोहितसम्मिश्रवर्णे तद्वति तु त्रिषु ।
ज्ञेया तु किमिरा स्त्रील्वे मृगभेदे विलेशये ॥ ४८२ ॥
क्रिमिघ्नो ना विडङ्गाख्यभेषजे त्रि तु हन्तरि ।
अमनुष्ये क्रिमेः स्त्री तु किन्नरी पिनलाह्वये ॥ ४८३ ॥
पक्षिभेदे तथा वीणाभेदे चण्डालवल्लकी ।
इति ख्याते किंशुकस्तु पलाशाख्यमहीरुहे ॥ ४८४ ॥
इङ्गुदाह्वयवृक्षे च तयोस्तु प्रसवे नपि ।
क्षिपण्युस्तु पुमान् मायावायुधेऽथवसन्तयोः ॥ ४८५ ॥

स्त्री विद्युति किरीटी तु नार्जुने त्रिः समौलिके।
कीनाशोऽसौ यमे पीतहरिते मिश्रवर्णके ॥ ४८६ ॥

पीतप्रधाने पुंसि स्याद् राक्षसे तु द्वयोस्त्रि तु।
कदर्यानार्यमृतकक्रुतघ्नेषु कृपीविले ॥ ४८७ ॥

पूर्वोक्तवर्णवद्द्रव्येऽप्याममांसाशकेऽप्यथ।
क्री करञ्जफलस्यैकबीजे मधुरभेषजे ॥ ४८८ ॥

क्रीतकं क्रीतकी तु स्त्री नीलिसंज्ञौषधी स्मृता।
कीचको ना वेणुभेदे यो ध्वनत्यनिलोद्धुतः ॥ ४८९ ॥

स्याले विराटराजस्य महाभारतविश्रुते।
क्री तु कीचकवृक्षस्य प्रसवे क्षीरिकः पुनः ॥ ४९० ॥

राजिलाह्वयसर्पे द्वे क्षीरिका तु स्त्रियामियम्।
दुग्धिकासंज्ञकस्तम्बे फलाध्यक्षाख्यपादपे ॥ ४९१ ॥

क्षीराशस्तु द्वयोर्हंसे क्षीरस्य स्वाशके त्रिषु।
कीकसं त्वस्थनि क्लीबं क्रिमिषु त्वणुषु द्वयोः ॥ ४९२ ॥

कीकटस्तु द्वयोरश्वे भेदवत् तु मितम्पचे।
नीवृद्भेदे त्वनार्याणां निवासे पुंसि भूम्नि च ॥ ४९३ ॥

कुतपः सूर्यवद्द्वयोर्ना वृषभेऽप्यतिथावपि।
भागिनेये द्वे तु विप्रे पुन्नपुंसकयोः पुनः ॥ ४९४ ॥

दर्भेऽप्यह्नोऽष्टमे भागे तिले छागजकम्बले।
वाद्यवादकसामग्र्यां नाट्यस्येत्याह यादवः ॥ ४९५ ॥

वाद्यविन्यास इत्याह शाश्वतः सज्जनः पुनः।
सायमास्तरणे प्राह परे त्वास्तरणे विदुः ॥ ४९६ ॥

---

१. 'धाने तु पु' ग. पाठः. २. 'का' ङ. पाठः. ३. 'की' ग पाठः ४. 'ल' ग. पाठः. ५. 'प्या' ग. पाठः.

देहल्यां चाथ कुशलं निपुणे त्रिः क्षमेऽपि च ।
क्षेमे मङ्गलयुक्ते च दीक्षितेऽप्यजयोऽथ नप् ॥ ४९७ ॥
पर्याप्तौ मङ्गले पूर्णे स्यात् कुसुम्भं तु कुङ्कुमे ।
क्ली महारजतेऽप्यस्य पुनः स्तम्बे स्त्रियामियम् ॥ ४९८ ॥
कुसुम्भी पुंसि तु प्राह वरधान्यान्तरे परः ।
कमण्डलौ च कुसुमस्त्वसौ स्त्रीपुष्पपुष्पयोः ॥ ४९९ ॥
नेत्ररोगविशेषे च फले च रभसोऽपठीत् ।
कुणपस्तु क्रिमौ द्वे स्यात् कुत्सिते भेद्यलिङ्गकः ॥ ५०० ॥
हंसारिकायां‡ स्वाचष्टे रभसः कुणपी स्त्रियाम् ।
कुणपोऽस्त्री शवे क्ली तु पूयेऽथो कुक्कुटो द्वयोः ॥ ५०१ ॥
कृकवाकौ च भासे च मत्स्यजात्यन्तरेऽपि च ।
शूद्रायां मागधाज्जाते निषादीवैश्ययोः सुते ॥ ५०२ ॥
शूद्राज्जाते निषाद्यां च सुनिषण्णाह्वये पुनः ।
शाके पुंसि द्वयोस्तु स्यात् कुक्कुरः श्वनि नप् पुनः ॥ ५०३ ॥
स्थौणेयसंज्ञके गन्धद्रव्ये द्वे तु कुरङ्गवाक् ।
स्यान्महाहरिणे चापि वानरेऽप्यथ सा स्त्रियाम् ॥ ५०४ ॥
कुरङ्गी भोजपुत्र्यां स्यात् पुन्नपुंसकयोः पुनः ।
कुडङ्गः स्यान्निकुञ्जे चच्छदिष्यप्यथ सा त्रयी ॥ ५०५ ॥
बदर्यां कुवली क्ली तु तत्फलेऽप्युत्पलेऽप्यथ ।
कुवेलमुत्पले क्लीब त्रिस्तु कुत्सितवेलके ॥ ५०६ ॥
कुम्भीकः पुंसि पुन्नागवृक्षे तत्प्रसवे तु नप् ।
कुमुदस्य फलेऽप्युक्तमायुर्वेदविचक्षणैः ॥ ५०७ ॥

---

१. 'द्रा' क. ङ. च. पाठः. २. 'पुनः' ग. पाठः. ३. 'पिर्णद्धि क्रि' क. ङ. च. पाठः. ४. 'पिणद्धि' क. ङ. च. पाठः. ५. 'मु' क. ङ. च. पाठः.

---

‡ 'विट्सारिकायाम्' इति स्यात् । 'कुणपी पुनः । विट्सारिकायाम्' इति मेदिनी ।

कुरीरस्तु पुमान् मालाविशेषे कम्बलेऽपि च ।
क्लीबं तु मैथुने पद्मे जाले च मुनिभाषितम् ॥ ९०८ ॥
रभसस्त्वाह कुटजो मुनौ पुंसि द्रुमान्तरे ।
क्लीबलिङ्गं तु वृक्षस्य तस्य पुष्पे फलेऽपि च ॥ ९०९ ॥
कुररस्तु द्वयोरुत्क्रोशाख्यपक्षिणि सा पुनः ।
कुररी स्त्री भवेन्मेष्यां कुमुदं तु नपुंसकम् ॥ ९१० ॥
पुंस्यप्यन्ये कैरवे स्याद् रक्ताब्जेऽप्यथ ना स्मृतः ।
स्याद् दिग्गजविशेषे च कपिभेदे च विश्रुते ॥ ९११ ॥
रामायणकथाया स्त्री पुनः कट्फलसंज्ञके ।
पादपे कुमुदा ब्रूते पुनर्गम्भारिकाह्वये ॥ ९१२ ॥
पादपे रभसोऽथ द्वे कुमुखः सूकरे त्रि तु ।
कुत्सितास्ये कुमारस्तु स्कन्दे ना वरुणद्रुमे ॥ ९१३ ॥
अश्वानुचारके चापि युवराजे मृतावपि ।
कुत्सिताया द्वयोस्तु स्याद् बाले स्त्रीपुंसयोः पुनः ॥ ९१४ ॥
जम्बुद्वीपे कुमारी तु कन्यायां स्यात् स्त्रियामसौ ।
मृगजात्यन्तरे चापि हिमाभे नवमालिका ॥ ९१५ ॥
इति प्रसिद्धवल्ल्या च तरणीसंज्ञगुल्मके ।
कुस्तुम्बुर्यां मृडान्यां च तथा जनपदान्तरे ॥ ९१६ ॥
तद्राजेऽप्यथ यस्यास्ति कुमारस्तत्र मेघवत् ।
कुचेलस्तु त्रिषु ज्ञेयः कुवाससि नृपि स्वदः ॥ ९१७ ॥
कुत्सिते वाससि स्त्री तु कुचेला स्याल्लतान्तरे ।
आविद्धकर्णिपाठादिसंज्ञाभिः शास्त्रविश्रुते ॥ ९१८ ॥
कुल्माषः कुरुविन्दाख्यमणौ व्रीह्यन्तरे च ना ।
यवभेदे मावकाख्ये परे तु यवपिष्टके ॥ ९१९ ॥

---

१. 'ह्वे' ग. पाठ. २. 'क' क. ङ. च. पाठः.

सूपभक्ते परेऽन्ये तु विदले क्ली तु काञ्चिके ।
कुल्माष. पक्वमुद्गादिपिण्डे ना शबलाह्वये ॥ ९२० ॥
वर्णे च त्रि तु वर्णेन शबलाख्येन संयुते ।
नागराजविशेषे तु कुहरः स्यान्नृलिङ्गकः ॥ ९२१ ॥
क्लीबलिङ्गं तु विज्ञेयं गह्वरे विवरेऽपि च ।
कुलिशस्त्वस्त्रियां वज्रे मत्स्यभेदे तु स द्वयोः ॥ ९२२ ॥
कुलालो द्वे कुम्भकारे कुलाली तु स्त्रियामियम् ।
चक्षुष्यासंज्ञभैषज्ये कुलायस्तु नृलिङ्गकः ॥ ९२३ ॥
पक्षिनीडे गृहे च स्यादेकाहक्रतुभेदके ।
कुलस्य स्वायके[3] त्रिः स्यात् कुणालस्तु पुमानयम् ॥ ९२४ ॥
कृतमाले क्ली तु पुरभेदेऽथ कुकूलवाक् ।
स्यात् क्लीबं शङ्कुभिः कीर्णे श्वभ्रे ना तु तुषानले ॥ ९२५ ॥
कुहनस्तु त्रिरीर्ष्यालौ मायाविनि च ना पुनः ।
वल्मीके चेन्द्रजाले तु वैजयन्त्यामभाषत ॥ ९२६ ॥
नपुंसी तु दम्भचर्यायां दम्भशीलत्व एव च ।
कुहना क्ली तु मायायां मूषिके तु द्वयोर्भवेत् ॥ ९२७ ॥
कुलकस्तु पुमान् काकतिन्दुकाख्यमहीरुहे ।
वृक्षे कुरवकाख्ये च क्लीबं तु स्याल्लतान्तरे ॥ ९२८ ॥
पटोलसंज्ञे काव्यालङ्कारभेदे च तत् त्रि तु ।
संयुक्ते कुतलो तु स्त्री शाकभेदे नृनपू पुनः ॥ ९२९ ॥
कुतलो भूतलेऽथ स्युः कुन्तलाः पुंसि भूम्नि च ।
मध्यदेशस्थिते नीवृद्भेदे जनपदान्तरे ॥ ९३० ॥
दक्षिणापथदेशस्थे अथ स्यात् कुन्तलः पुमान् ।
तस्य राजनि तस्यापि स्युरपत्येषु भूम्नि च ॥ ९३१ ॥

---

१. 'श त्व' क. ङ. घ. पाठः. २. 'भूमे च' ङ. पाठः. ३. 'ति' क. ङ. च. पाठः.

बहुष्वथ स्त्र्यपत्ये तु कुन्तली स्त्री पुमान् पुनः।
केशेऽथ रभसः प्राह कालेऽपि बहुशब्दवित्॥ ९३२॥
अथ स्यात् कुटलो गात्रकृत्यूर्यौ पुंसि नप् पुनः।
विद्यादाभरणेऽथ त्रिः कुटिलं कुञ्चिते भवेत्॥ ९३३॥
तगरे तु स्त्री तगरपादिकायां स्त्रियामिति।
रभसेनोदिताथास्त्री कुड्मलो मुकुलेऽथ नप्॥ ९३४॥
विद्यादासनभेदेऽस्य लक्षणं च प्रचक्षते।
वैजयन्त्यां यथा प्रोक्तमासीनस्यासनेष्वदः॥ ९३५॥
नागदन्तकमूर्ध्वज्ञोर्जानुस्थौ प्रसृतौ भुजौ।
सूचीमुखमिदं पाणितलौ चेत् संहतौ मिथः॥ ९३६॥
अर्धसूची तु तौ द्वौ चेत् प्रादेशान्तरितौ* मुखात्।
कुड्मलं मुकुलीभूतौ तौ चेदूर्ध्वमुखौ स्थितौ॥ ९३७॥
इत्येवं योगशास्त्राणि समीक्ष्य कृतिनोदितम्।
कुमुलं कुसुमे क्लीबं हिरण्ये च द्वयोः पुनः॥ ९३८॥
शिशौ त्रिषु पुनः कान्ते कुरुलस्तु पुमानयम्।
अलके स्त्री तु कुरुली लक्षवेधे धनुष्मताम्॥ ९३९॥
कुरुमस्तु द्वयोः कारौ भाजने तु पुमानयम्।
अथ स्त्री कुपितं घाते निष्कृष्टे त्वभिधेयवत्॥ ९४०॥
कुत्सितं स्यात् पर्युषिते त्रिष्वृणे तु नपुंसकम्।
कुसीदं त्वृणवृद्धौ स्त्री कश्चित् तु विवृणोति तत्॥ ९४१॥
ऋणवृद्ध्या जीविकायां मेघवत् त्वलसे तथा।
वृद्धिजीविनि पुंयोगात् पुनर्ङीचिः स्त्रियां यदा॥ ९४२॥

१. 'ह' ग. पाठः. २. 'कु' क. ट. प. पाठ.. ३. 'मो' ग. पाठः. ४. 'क' ग. पाठः.

* 'अर्धसूची तु तौ द्वौ चेत् प्रादेशान्तरतो मुखात्' (पृ. १००. श्लो.२१५) इति तु मुद्रितवैजयन्तीपाठः.

तदा स्त्रियां कुसीदायी§ कुटीरस्तु पुमानयम् ।
क्षुद्रागारे कर्कटे तु द्वे कुम्भीरस्त्वयं द्वयोः ॥ ५४३ ॥
नक्रे चोरे पुन(स्त्री:स्त्रि)स्यात् कुम्भीलस्तु पुं[1]मानयम् ।
स्यालाख्यमत्स्ये त्रिषु तु श्लोकच्छायादिहारिणि ॥ ५४४ ॥
चोरे च कुन्दु[2]मस्तु स्यात् पुमान् पुञ्जे[3] द्वयोः पुनः ।
मार्जारे कुट्टिनी तु स्त्री शम्भल्यां कुट्टना पुनः ॥ ५४५ ॥
छेदने कुत्सने चापि न ना स्यात् कुनटी पुनः ।
स्त्रियां मनःशिलायां स्यात् कुत्सिते तु नटे द्वयोः ॥ ५४६ ॥
कुशिकस्तु कोष्टरि द्वे स्यादुलूकेऽप्यथो नपि ।
क्षुद्रकं फाणिताभिख्ये विकारे स्याद् गुडस्य हि ॥ ५४७ ॥
तथैव कुप्यलवणसंज्ञे स्याल्लवणान्तरे ।
द्वे तु क्षत्रियभेदे स्यात् क्षुरमस्तु पुमानयम् ॥ ५४८ ॥
अर्धचन्द्राख्यशस्त्रे स्यात् कश्चित् त्वश्वान्तरेऽभ्यधात् ।
कुञ्चिका त्वङ्कुटाभिख्ये[4] कपाटोद्घाटयन्त्रके ॥ ५४९ ॥
तूलीसूचिकयोश्चाह रभसो भीरुभीषणे ।
साधने कुञ्चितरि तु त्रिरथो कुञ्जरा स्त्रियाम् ॥ ५५० ॥
पाटलायां च धातक्या द्वे तु हस्तिन्यथ स्त्रियाम् ।
काञ्चनद्रौ गुडूच्यां च कुण्डली क्ली तु पाशके ॥ ५५१ ॥
अक्ली तु कर्णवेष्टे स्यात् त्रिलिङ्ग्या च परोऽवदत् ।
कुद्दालस्तु पुमान् गोदारणाख्ये खानसाधने ॥ ५५२ ॥

---

१. 'द्वयोरय' क. ङ. च. पाठः. २. 'त्तु' ग. पाठः. ३. 'च्छे' ग. पाठः. ४. 'हय' ग. पाठः. ५. 'वा' ङ. पाठः.

---

§ 'वृषाकप्यग्निकुसितकुसिदानामुदात्तः' (४. १. ३७) इति सूत्रे 'कुसिदशब्दो ह्रस्वमध्यो, न तु दीर्घमध्यः' इति सिद्धान्तकौमुदी ।

क्लीबं तु वैजयन्त्याह कोविदारद्रुमे तु ना।
क्लीबं तु प्रसवे तस्य कुठरस्त्वभिधेयवत् ॥ ९९३ ॥
अपेतसारे स्तम्भे तु ना काठिञ्जरसंज्ञके।
कुरण्डो द्वे झषे ना तु वृद्धिसंज्ञे रुजान्तरे ॥ ९९४ ॥
मुष्कवृद्ध्यात्मके स्तम्बप्रभेदे त्वाह यादवः।
किङ्किरातह्वयेऽसौ तु [†]कुर्फाकुर्नो द्वयोः पुनः ॥ ९९५ ॥
मर्कटे ना तु कुतनुर्धनदे त्रि तु कुत्सिता।
तनुर्यस्य भवेत् तत्र कुटरस्तु द्रुमान्तरे ॥ ९९६ ॥
वर्धकौ च द्वयोस्तु स्याच्छकुनौ भेयवत् पुनः।
कुमुद्वान् कुमुदप्रायदेशे स्त्री तु कुमुद्वती ॥ ५९७ ॥
कुमुदस्य भवेत् स्तम्बे कुण्डली तु द्वयोरयम्।
मयूरे चित्रलमृगे तथैव स्याद् भुजङ्गमे ॥ ९९८ ॥
पुमांस्तु वरुणे प्रोक्तस्त्रि तु कुण्डलवत्यसौ।
कूपीवले कुडुम्बी द्वे कुडुम्बपति तु त्रिषु ॥ ९९९ ॥
कूश्माण्डस्तु पुमान् विघ्नराजस्य प्रियभृत्यके।
गणभेदे शालिजातिभेदे स्त्रीपुंसयोः पुनः ॥ ९६० ॥
फलवल्लीविशेषे स्यात् कूश्माण्डी स्त्री तु तत्फले।
'अवतेऽहेड' इत्यादिष्वृग्विशेषेषु नपुंस्त्रियोः ॥ ९६१ ॥
कूबरस्त्वस्त्रियां गन्त्रीसमाख्ये स्याद् रथान्तरे।
युगन्धराख्ये तु रथावयवे स्यान्नृलिङ्गकः ॥ ९६२ ॥
वीणावंशशलाकायां कूणिका स्त्री त्रिषु त्वसौ।
ज्ञेया कूणयितर्याहुः पुनः कृन्तत्र इत्यदः ॥ ९६३ ॥
अन्तरिक्षे लाङ्गलाग्रे लाङ्गले चापरे विदुः।
सुवर्णस्याभिघातार्थसाधने मशके पुनः ॥ ९६४ ॥

१. 'र्या' ग. पाठः. २. 'लभे' ग. पाठः.

† 'कुपाकुः कपिवह्नयर्के ना' इति तु मेदिनी।

कुन्तत्रो द्वे कृत्रिमस्तु वृकधूपाह्वये पुमान् ।
तुरुष्काख्ये च निर्यासे लवणे च विडाह्वये ॥ १६६ ॥

क्ली तु कांस्याह्वये लोहभेदे स्याद् भेद्यवत् पुनः ।
ज्ञेयः स्यात् कृतिनिर्वृत्ते कृसरस्तु पुमान् द्रुमे ॥ १६६ ॥

इङ्गुदाख्ये मिश्रवर्णभेदे च त्रिस्तु सद्भाति ।
कशेरुसंज्ञे तु जलस्तम्बभेदे नपुंसकम् ॥ १६७ ॥

तिलतण्डुलमाषैस्तु कृतायां कृसरा त्रयी ।
स्वागुल्यां स्यात् कृतज्ञस्तु शुनि द्वे भेद्यवत् पुनः ॥ १६८ ॥

उपकारं विजानाति यस्तत्राथ कृपाणवाक् ।
खड्गे ना छुरिकायां तु स्त्री कृपाण्यथ यादवः ॥ १६९ ॥

आह सौनिकशस्त्रे तां कर्तनीसंज्ञकेऽथ ना ।
कृन्तरः स्याद् वृक्षभेदे मक्षिकाकार्य एव च ॥ १७० ॥

आलोचने तु त्रिर्ना तु कुदरः* खदिरे सिते ।
केचित्तु हिंस्रे त्रिष्वाहुः कृपकस्तु पुमानयम् ॥ १७१ ॥

कूटसंज्ञे लाङ्गलाङ्गे भेद्यवत् तु कृपीवले ।
कृपिकस्तृणजातौ ना लाङ्गले तु नपुंसकम् ॥ १७२ ॥

केसरस्त्वस्त्रियां पुष्पकिञ्जल्केऽप्यश्वसिंहयोः ।
सटे स्यान्मातुलुङ्गाख्यफलस्यान्तर्द्रवास्पदे ॥ १७३ ॥

सूक्ष्मकोशे पुमांस्तु स्याद् बकुले नागकेसरे ।
पुन्नागे वेङ्कटाख्ये च पर्वते केसरा पुनः ॥ १७४ ॥

कार्पास्यां स्यात् स्त्रियां क्ली तु प्रसवेऽम्भोजभूरुहाम् ।
हिङ्गुन्यपि पटत्येतद् रभसः शब्दवित्तमः ॥ १७५ ॥

---

१. 'तु' ग. ड. पाठः. २. 'पू' ग. ड. पाठः.

---

* 'खदिरो दन्तधावनः । सिते तु तस्मिन् कदरः' (पृ.५०.श्लो.६३) इति तु वैजयन्ती ।

केरलास्तु नृभूम्नि स्युर्दक्षिणापथवर्तिनि ।
नीवृद्भेदेऽथ तद्देशसम्भूतेषु नृषु द्वयोः ॥ ९७६ ॥

तद्राजे तु पुमाञ्ज्ञेयः केरलः[1] स्त्री तु केरली[2] ।
तद्राजन्यस्त्र्यपत्ये स्यात् तथा स्याद् भेषजान्तरे ॥ ९७७ ॥

केशवस्तु पुमान् विष्णौ पुन्नागे त्रि तु केशिनि ।
केवलस्तु त्रिरेकाकिकृत्स्नयोरवधारिते ॥ ९७८ ॥

ज्ञाने तु पूर्णे क्लीबं स्यात् केचिदन्येऽवधारणे ।
निर्णीते त्वपरेऽथ स्यात् क्षेत्रज्ञो निपुणे त्रिषु ॥ ९७९ ॥

क्षेत्रस्य विज्ञातरि च ना त्वात्मन्यथ सा स्त्रियाम् ।
क्षेत्रिया क्षुद्रधान्ये स्याद् गर्वाधुरिति विश्रुते ॥ ९८० ॥

त्रिस्तु स्याद् दुष्प्रतीकारव्याध्यादौ धान्यवप्रजे ।
निराकार्यतृणे पारदारिके यत् पुनर्विषम् ॥ ९८१ ॥

देहान्तरे सङ्क्रमय्य चिकित्स्यं तत्र ना पुनः ।
क्षत्रिकः स्यात् तुरुष्काख्यनिर्यासे क्षेत्रिणि त्रिषु ॥ ९८२ ॥

क्षेपणं तु नपि क्षिप्ते पुन्नपुंसकयोः पुनः ।
पादाङ्गुष्ठाङ्गुलीमध्ये नौदण्डे क्षेपणी स्त्रियाम् ॥ ९८३ ॥

क्लेशकस्तु यमे नाथ क्लेष्टरि क्लेशितर्यपि ।
तथा क्लेशयितर्येनं भेद्यलिङ्गं प्रचक्षते ॥ ९८४ ॥

केदारस्त्वस्त्रियां क्षेत्रे शालिक्षेत्रे तु केचन ।
पुण्यस्थानविशेषे च रम्भस्त्वालवालके ॥ ९८५ ॥

केसरी तु पुमान् सिंहे मातुलुङ्गे तुरङ्गमे ।
पुन्नागे चाप्यथो भेद्यलिङ्गः केसरवत्यसौ ॥ ९८६ ॥

---

१. 'ट' क. ख. ग. पाठः. २. 'टी' क. ख. ग. पाठः.

